॥ श्रीः ॥

# प्रसन्नकाश्यपम्

( अभिज्ञानशाकुन्तलस्योत्तरभागः )

भावोल्लासिनी

समाख्यया व्याख्यया समलङ्कृतम्



जग्गू वकुलभूषणः

॥ श्रीः ॥

श्रीयदुशैलवासि वालधन्वि जग्गूवकुलभूषणकवि विरचितम्.

# प्रसन्नकाश्यपम्

नाम

## नाटकम्

( अभिज्ञानशाकुन्तलस्योत्तरभागः )

श्रीमत्परमहंस परिव्राजकाचार्यैः श्रीमद्वेदमार्गप्रतिष्ठापकाचार्योभय-
वेदान्ताचार्यैः काञ्चीपुरमठाधिपतिभिः श्रीवादिकेसरि
अलहियमणवाळ गोविन्दरामानुजस्वामिभिः
अनुगृहीतया

श्रीवेदान्तविदुषा, सांख्ययोगविदुषा, साहित्यालंकारविदुषा महीशूर-
महाराजास्थानाधिगतसाहित्यरत्नबिरुदेन कलकत्तनगराधिगत
सांख्यतीर्थोपाधिना जग्गूवेंकटाचार्येण संशोध्य
परिष्कृतया

## भावोल्लासिनी

समाख्यया व्याख्यया समलङ्कृतम्

 १९५१ [ मूल्यम् 1—8—0

॥ श्रीः ॥

# विज्ञप्तिः

हन्त, भोः, किमिति ब्रूमः,

क्व स महाकविः काळिदासः, क्व वा मनुष्यमात्राङ्कुरोयं जनः, "काव्येषु नाटकं रम्यं तत्रापि च शकुन्तला"। इति जगद्विख्यातेन शाकुन्तलेन यदयूयुजदयं स्वकृतिमिति, तदेतच्चामीकरारकूटयोस्तुलानोलनेन समीकरणकल्पं, इतीदं नाटक मनवलोक्यैव मा निन्दन्तु दोषज्ञाः, यत्तेनैव महाकविनोक्तं,–

पुराणमित्येव न साधु सर्वं नचापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥

इति,

तदेतत्संस्मृत्यैतदपि कटाक्षयन्तु सहृदयाः इत्यभ्यर्थये । तत्रभवतां सहृदयोत्तंसानां गुणैकपक्षपातिनामस्य नाटकस्योपोद्घातमनुगृहीतवतां निवृत्ताङ्गलकालेज संस्कृत प्रोफेसर एम्. हिरयण्णार्याणां, सन्निधौ कृतज्ञतापुरस्सरमनन्तान्धन्यवादान्समर्पयामि । किञ्च अस्य नाटकस्य मुद्रणार्थे द्रविणसाह्यं कृतवतां गुणैकपक्षपातिनां यूनवर्सिटि अधिकारिणां सन्निधौ सप्रमोदमनन्तान् धन्यवादान्समर्पयामि । किञ्च, सानन्दं व्याख्यामनुगृहीतवतां श्रीकाञ्चीमठाधीश्वराणां सहृदयोत्तंसानां वादिकेसरिसंयमिसार्वभौमानां चरणारविन्दाभ्यां सप्रश्रयं, नमोवाकं प्रशास्से ॥

सहृदयानां विधेयः

जग्गू वकुलभूषणः

॥ श्रीः ॥

# उपोद्घातः

---

आर्यास्सहृदयाः, सरसकविजनसमुदये प्रथमतरपरिगणितेन कालिदासकविना विरचित मनोहरप्रबन्धसर्वस्व शाकुन्तले प्रतिपदगिरि समुदञ्चितसुधारसझरीसुगाढमानसास्तत्रभवन्तो भवन्तः, तदुदन्तावलम्बिनि तादृशललितपदनिबन्धने तत्परीवाहरूपे तदुत्तरभागात्मके च प्रसन्नकाश्यपे प्रसन्नमानसास्सन्तः कविवरमेनं शाकुन्तले स्वयं कृतां भावुकजनमनोगतां स्वजनवियोगवेदनामपरिहृतामपनेतुं प्रसन्नकाश्यपौषधं भिषग्वरं पुनरवतीर्णं कालिदासमेव परं समुद्भावयन्तु ।

सोऽयं कविः सरसोपनतवाणीविलासवैभवेन सविस्तरप्रबन्धनिर्माणकौतुकी सम्भवन्नपि शाकुन्तले पुनस्समाधेयं स्वजनवियोगलेशं भृशं परामृशन्नलब्धमनोरथः परवशोपनत समाप्तिसाधनो मन्दंमन्दमुपररामेति विभावयामः ।

किञ्च, कालेयमहिम्ना परिमुषितधारणमनोविलासिनां प्रसन्नकाश्यपे सविस्तरावबोधसमाकलितमनसामास्तिक जनानां सौकर्यसम्पादनाय कविवरभावरसानुसारिसविस्तर विवरणकृतिमपि काञ्चित्सकरुणाः केपि धन्यतमाः समापादयेयुरिति सानुनयं प्रार्थयामहे ॥

गुणैकमानसाःप्राज्ञाः प्राङ्नवीनाविचारकाः ।
प्रसन्नकाश्यपे कुर्युः शाकुन्तलसमां मतिम् ॥

श्रीवादिकेसरि रम्यजामातृ गोविन्दरामानुजसंयमी
श्रीयादवाचलमठाधिपतिः

# Prasanna-Kasyapam



This is a play in three Acts, and it is intended to be a supplement to the *Shakuntalam*. Its theme, as indicated by the title, is the appeasement of *Kanva* by *Dusyanta* who, with his concert and young son, visits the sage in his hermitage. The characters here are the same as those in Kalidasa's play; and the reader is often remided of that play by the beauty of the situations depicted as well as the delicacy of the sentiments expressed here. The style is simple and elegant; and the dialogue is vivacious throughout. The work is sure to interest all lovers of Sanskrit literature.

M. Hiriyanna,
*Retired Professor of Sanskrit,*
*Mysore University.*

Mysore,
8th September 1946.

॥ श्रीः ॥

॥ शुभमस्तु ॥

श्रीमते हयग्रीवाय नमः

# प्रसन्नकाश्यपम्

## प्रथमोऽङ्कः

सन्तोष्य व्रजवासिनो निजगुणैः कालोचितै स्सादरं
वो द्रक्ष्यामि पुनस्समागत इति व्याहृत्य तान्दुःखितान्
यस्तस्मान्मधुरां गतो बहुतिथात्कालादुपेत्य व्रजं
तत्रत्यान्समनन्दयत्परिणतान्कृष्ण स्स पुष्णातु वः ॥ १ ॥

---

भावोल्लासिनी व्याख्या

यस्मादुदग्रा वाग्वल्ली भासते सौरभाञ्चिता ।
नमस्तस्मै प्रतीक्ष्याय महसे मोददायिने ॥

प्रसन्नकाश्यपो ग्रन्थः प्रसन्नकविना कृतः ।
शाकुन्तलं पूर्वभागं सम्बोधयति साम्प्रतम् ॥

यास्यत्यद्येति निर्विण्णकाश्यपेनाप्रसादवान् ।
कालिदासस्स्वयं भूमौ परभागचिकीर्षया ॥

श्रीबालधन्विवंशेन्दुर्जग्गू वकुलभूषणः ।
प्रसन्नकाश्यपेनाद्य वर्धते सुप्रसादवान् ॥

पूर्वं शाकुन्तलेऽहं चिरपरिचयवांस्तत्र तत्र स्वकीयैः
विश्लेषोदन्तसूक्त्या परमुपगमितः कालिदासेन खेदम् ।

तेनैवाद्य प्रणीतां सरलकृतिमिमामाप्तसंयोगरम्यां
स्मारंस्मारं नितान्तं प्रमुदितहृदयः काश्यपोऽस्मीतिमन्ये ॥

शाकुन्तलानुवृत्तत्वं प्रकटीकुर्वता मया ।
न व्याख्या क्रियते किन्तु भावार्थो लिख्यते क्वचित् ॥

---

प्रथमं तावदिदमावेद्यते सहृदयानामामोदार्थं । श्रीमान्सरसकविकुल चक्रवर्ती कालिदासः सततपरिचितवाल्मीकिरामायणसारसर्वस्वः, तदनुसारिण्या सरण्यैव स्वप्रबन्धानखिलानपि निरममीतेति तत्र तत्र सुधीभिः निरूप्यते । प्रकृते शाकुन्तलमधिकृत्य यथामति किञ्चिदुद्भावयामः श्रीरामायणे सवितृवंशतिलकः श्रीमान्दाशरथिः प्रथमं कौशिकमखसंरक्षण कैतवेन नृशंसान्निशाचरान्निहत्य प्रविश्य च मिथिलां, निजगुणपरवशचित्तां जनकेन परिपालितां सीतां परिणीय चिरं वने वसन्, मध्ये सीताया वियोगं निशाचरनिषूदनानन्तरं संयोगं च संप्राप्तः, आपन्नसत्वां च तां रजकनिमित्तं कानने विसृज्य वियोगखिन्नमनाश्चिरमुवास राज्ये । सीतात्वाश्रमे सुखप्रसूताऽनुगृहीता च महर्षिणा निजबालकबाल्यकेळीरसमनुभवन्ती पतिसंयोगकालाकांक्षिणी दैवकृतयादृच्छिकोपनतयुद्धव्याजेन सन्निहितं वल्लभं सपुत्रं सम्प्राप्य महर्षेराशिषां पात्रमासीत् । एवं चन्द्रकुलावतंसो दुष्यन्तो मृगयासक्तो विपिनमुपगम्य निहत्य च नृशंसानारण्यान्प्राणिगणान्प्रविश्य काश्यपाश्रमं निजसौन्दर्यादिगुणवशीकृतचित्तां काश्यपपरिवर्धितामुपयम्य च शकुन्तलां तत्रैव वसन्मध्येवियुक्तो मुनिजनमखविघातकान्निहत्य च राक्षसान्पुनस्सङ्गतामापन्नसत्वामाश्रम एव विसृज्य दुर्वाससश्शापमहिम्ना वियोगकलुषितमनाः कथञ्चित्कालं निनाय । शकुन्तला तु मारीचाश्रमे सुखप्रसूतबालका तत्रैव बालकबाल्यलीलारसमनुभवन्ती पतिसमागमकालप्रतीक्षाऽऽकास्मिकोपनतस्वर्लोकयुद्धव्याजेन दैवकृतसन्निधिना वल्लभेन सपुत्रेण संयुज्य महर्षेराशिषां पात्रमभवत् । एवमनेकशो भावाः परस्परानुसारिणो बुद्धिमद्भिरूह्याः । संयोगक्लेशां वियोगबहुलां च रामायणकथामनुसृत्य शाकुन्तलेपि पुनर्बन्धुवर्गसंयोग-

मन्तरा तत्र तत्र वियोगमात्रवृत्तान्तपर्यवसायी कालिदासो विरराम । शाकुन्तले स्वजनवियुक्तांस्तांस्तान्पुनस्संयोक्तुकामश्श्रीबालुधन्विकुलतिलकोऽपरकालिदासो जग्गू वकुलभूषणकविः तदुत्तरभागचिकीर्षया पुनस्संयोगेन वियुक्तजनमनस्सन्तोषकारिणः श्रीकृष्णस्योदन्तं मनसि निधाय प्रसन्नकाश्यपाख्यं ग्रन्थं निरन्तरायं प्रणेतुकाम आदौ गोपीजननयनानन्दं श्रीकृष्णमेव नान्द्या प्रस्तौति । सन्तोष्येति । अत्र च श्रीकृष्णः गोकुलवासिन आबाल्यं चिरपरिचितान्धारकपोषकभोग्यत्वेन स्वस्मिन्नेवाहितमनसो वियोगाक्षमान्गोपजनान्कार्यवशान्मधुराप्रस्थानावसरे विसृज्य गन्तुकामोऽचिरेण पुनः प्रतिनिवृत्य वो द्रक्ष्यामीति व्याहृत्य गतः कृतकार्यो यथोक्तकारी मधुरातः पुनः प्रतिनिवृत्य तैस्संयुज्य यथामनोरथं तान्समतोषयत् । इति यथावस्थितोऽयं माङ्गलिकोऽर्थः । (काव्यार्थसूचना) व्रजवासिन इत्यनेनाश्रमवासिनश्शकुन्तलाप्रियंवदादयस्सूचिताः अत्र व्रजवासित्वोक्त्या नागरिका इव न वञ्चकाः, किन्तु ऋजुस्वभावाः, इति सूच्यते । प्रकृते च शकुन्तलादीनामेतादृशस्स्वभावस्सूचितः । कालोचितैर्निजगुणैस्सादरं सन्तोष्येत्यनेन, "तपति तनुगात्रि मदनः" "सन्दष्टकुसुमशयनानि", "इदमनन्यपरायणमन्यथा", "परिग्रहबहुत्वेपि", "गान्धर्वेण विवाहेन", इत्यादिरीत्या कालोचितनिजगुणाविष्करणपूर्वकं शकुन्तलादिमनस्संतोषणं सूचितं । वो द्रक्ष्यामि पुनस्समागत इति व्याहृत्य तान्दुःखितान्, इत्यनेन, "एकैकमत्र दिवसे दिवसे मदीयं" इत्यादि श्लोकार्थसूचितः । उत्तरार्धेन नगरात्पुनः कण्वाश्रमागमनं, कण्वादीनां मनस्सन्तोषणं च सूचितं ।

॥ नानेति ॥ नानानाटकनिर्मातेत्यनेन, कवेः कवितानिष्णातत्वं सूचितं । नाटकान्तं कवित्वमिति हि प्रसिद्धिः । नानेत्यनेन, अनेकविधनाटककर्तृत्वं, नाटकनिर्माणे निरङ्कुशत्वं च सूचितं । स एवास्यापि कर्ता हीत्यनेन, एतन्नाटकस्य सहृदयहृदयावर्जकत्वं सूचितं । स एवास्य कर्तेत्यनेन कविकाव्यप्रशंसात्मिका प्ररोचना प्रदर्शिता ।

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

सूत्रधारः — (सविनयं) एवमार्यमिश्रान्विज्ञापयामि,

नानानाटकनिर्माता यः कोविदमुदावहः ।
स एवास्यापि कर्ता हि जग्गूवकुलभूषणः ॥॥ २ ॥

अये, किन्तुखलु, मयि विज्ञापनैकताने शब्द इव श्रूयते, पश्यामि तावत् (परिक्रम्य) आं, ज्ञातं, —

सदार स्सकुमारश्च कण्वाश्रमदिदृक्षया ।
आयाति स्यन्दनेनासौ दुष्यन्तः कौतुकी वनम् ॥ ३ ॥

( निष्क्रान्तः )

( स्थापना )

---

॥ सदार इति ॥ दुष्यन्तः पूर्वमपत्नीकोऽपुत्रश्चाऽऽधमर्षिसपर्यश्च साशङ्कं स्यन्दनमपि दूरतस्संस्थाप्य सर्वाभरणविहीनः प्रविवेश काश्यपाश्रमं । पश्चाच्छकुन्तलातिरस्कारेण कण्वाद्भीतस्तदाश्रमस्मरणमपि नाकरोत् । कथं पुनः दिदृक्षा सञ्जायेत । साम्प्रतं कण्वस्यापि सन्तोपकारी सन् कौतुकी निर्भयं सदारस्सकुमारश्च स्यन्दनेन सगाम्भीर्यं सकुटुम्बो रथाधिरूढः "कण्वाश्रमदिदृक्षया" एतद्वैभवदर्शनेन कण्वाश्रमवासिनामाशीर्वादलाभेच्छया वनमायाति । न पुनर्मृगयार्थं । अत्र सदार इति प्रथमोपन्यासेन, पत्नीपुरुषकारेणैव महर्षिकरुणा सम्पादनीयेति सूचितं । एतदेवोत्तरत्र वक्ष्यते कविनैव । शकुन्तला — (समन्दस्मितं) किं, हं, एव्व अगदो गमिस्सं । राजा – महान्प्रमोदः, इति। कविरयं शाकुन्तले मारीचाश्रमेपि भार्यापुरस्सरमेव महर्षिदर्शनं सञ्जातमिति हृदि कलयन् तथैवात्राप्यान्तरं भावं व्यवृणोत् ॥

॥ किमिदं कातरेवेत्यादि ॥ अत्र कातरेवेति, पूर्वं शचीतीर्थेऽङ्गुलीयकवियोगेन पतिविप्रश्लेषस्मरणभीतां शकुन्तलां प्रति अधुना निर्भया

(ततः प्रविशति यथानिर्दिष्टो राजा)

राजा — प्रिये, सन्निहितं शचीतीर्थमुपस्पृश्य यास्यामः,

शकुन्तला — (1) मा गच्छदु अज्जउत्तो, अह्माणं सिणेहं विह डइस्सइ,

राजा — (सस्मितं) किमिदं, कातरेव अप्रमत्तास्तावदधुना तीर्थमुपस्पृशामः, (रथादवरुह्य) किन्नु खलु, अद्यापि चिरयति माढव्यः,

भरतः — (2) अम्ब, सो पासाणसअळेहिं मक्कटउळं भीसअंतो दूळे वट्टइ ।

राजा — (सस्मितं) सोपि बुध्या सजातीय एव,

(ततः प्रविशति वृद्धकंचुकिद्वितीयो रथेन विदूषकः)

विदूषकः — (3) (रथादवरुह्य) वच्छ, भरद, एहि दाव, दंसणिज्जं दंसेमि ।

---

छाया — (1) मागच्छत्वार्यपुत्रः, अस्माकं स्नेहं विघटयिष्यति,

(2) अम्ब, स पाषाणशकलैर्मर्कटकुलं भीषयन्दूरे वर्तते ।

(3) वत्स भरत, एहि तावद्दर्शनीयं दर्शयामि,

---

उपस्पृशामः, इति वक्तव्ये, अप्रमत्ताः इति वक्तुर्दुष्यन्तस्य वाक्यमिदं, पूर्वमनवधाननिमित्ते तस्मिन्वियोगदुःखे किमनेन सरसाऽपराद्धं इति भावगर्भं । किञ्च अत्र बहुवचनस्वारस्यादुभयोरप्यनवधानं वक्तुमुचितं । तदित्थं । दुष्यन्तस्य राजसभायां शकुन्तलाबोधनकालेप्यनवधानमेकं । सदा स्वकरधृतस्याङ्गुलीयकस्य वियोगनिदानानवधानं द्वितीयं । शकुन्तलायास्तु नगरगमनावसरे सख्या बोधितं राज्ञे आत्मनस्स्मारकमङ्गुलीयकदर्शनं विस्मृत्य तदङ्गुलीयकानवधानं । इति कवेराशयः

भरतः — (1) (रथादवरुह्य) किं तं दंसेहि, (उपसर्पति)

विदूषकः — (2) पेक्ख, (चेलाञ्चलनिबद्धान्भेकार्भकान्दर्शयति)

भरतः — (3) किं एदं एव्व मुञ्च मुञ्च ।

राजा — वयस्य, शचीतीर्थमिदं उपस्पृशामः,
(सर्वे शक्रावतारेणावतीर्य तीर्थमुपस्पृशन्ति)

राजा — शिशिर शीकर वीचि परम्परा —
परिहृतामित वर्त्मपरिश्रमाः ।
ननु कृता वयमम्बुजलोचने
कथमिदं समुपालभसे सरः ॥ ४ ॥

शकुन्तला — (4) इमिणा पुव्वं अङ्गुळीअअं ओहरिदं दाणिं अज्जउत्तस्स सण्णिहाणादो पडिस्समो ओहरिदो ।

---

छाया — (1) किं तद्दर्शय,
(2) पश्य,
(3) किमेतदेव मुञ्च मुञ्च,
(4) अनेन पूर्वमङ्गुलीयकमपहृतं इदानीमार्यपुत्रस्य सन्निधानात्परिश्रमोऽपहृतः,

---

अतएव दुष्यन्तेन स्वेन सह शकुन्तलामेकीकृत्य, अप्रमत्तास्तावदुपस्पृशामः, इति बहुवचनं प्रयुक्तं ।

॥ शिशिरेति ॥ हे, अम्बुजलोचने, शकुन्तले, पूर्वं मालिनी परस्पराभिलाषिणोरनधिगतसङ्गमयोरावयोः शिशिरशीकरवीचिपरम्पराभिरधिकमानसपरिश्रमापादिनी दुस्सहाऽभवत् । अधुना सर इदं सङ्गतयोरावयोरतिथिपूजकमिव शीतलजलकणिकाभिः परिश्रमनिवारकं दृश्यते । अतएव त्वमम्बुजलोचना, कमलायताक्षी । यदि दुस्सहं

विदूषकः — (1) जं किं चि ओहळणव्वग्गेण णेण चोळेण होदव्वं ।

भरतः — (2) (सहस्ततालं) ही, ही, एत्थ, कहं आहिण्डइ मच्छसमूहो एक्कं गेह्ण ।

विदूषकः — (3) मा खु, मा खु, गिळइ महवि अङ्गुलीअअं,

(सर्वे रथमधिरोहन्ति)

विदूषकः — (4) एहि वच्छ, मह रहं, अण्णं दंसेमि ।

भरतः — (5) पेक्ख, अम्ब, अज्जो आआरेइ ।

शकुन्तला — (6) गच्छ, तस्स रहेण आआहि ।

भरतः — (7) तुमं तुरिअं रहेण पुळदो गमिस्ससि, ता तस्स रहं ण गमिस्सं ।

---

छाया — (1) यत्किंचिदपहरणव्यग्रेणानेन चोरेण भवितव्यं,
(2) ही ही अत्र कथमाहिण्डते मत्स्यसमूहः एकं गृहाण,
(3) मा खलु, मा खलु, गिलति ममाप्यंगुलीयकं,
(4) एहि वत्स मम रथं । अन्यद्दर्शयामि,
(5) पश्याम्ब, आर्य आकारयति,
(6) गच्छ, तस्य रथेन आयाहि.
(7) त्वं त्वरितं रथेन पुरतो गमिष्यसि, तस्मात्तस्य रथं न गमिष्यामि,

---

मुकुलिताक्षी स्याः । एवं स्थिते अनुभवविरुद्धं कथ मिदं समुपालभसे । इति श्लोकतात्पर्यं ।

॥ इमिणा पुव्वमिति ॥ अनेन, सरसा, पूर्वं, आर्यपुत्रासन्निधानकाले मदवयवैकदेशीयमङ्गुलीयकमेकमेवापहृतम् । अधुना आर्यपुत्रसन्निधानात् पश्यतोरेवावयोर्देहे परिश्रमः आपादचूडं परितो व्यापी श्रमः

शकुन्तला — (1) ता एहि, (स्वाङ्कमारोपयति) (सूतः वाहन्प्रेरयति)

राजा — प्रिये, तदा तावत्सारङ्गे शरप्रयोगैकतानतया न मया सम्यगवलोकितोऽयं वनोद्देशः, सारथे, मन्दं प्रयातु स्यन्दनः (सूतः तथा करोति)

शकुन्तला — (2) तदा अण्णमाणसाए मए वि ण दिट्ठो एसो।

राजा — अहो, अकृत्रिमवनोद्देशरामणीयकं,

लता यथेच्छं परिरभ्य शाखिनः
परस्पराश्लिष्टविलम्बिशाखिकाः ।
लतागृहत्वं स्वयमेत्य बिभ्रति
श्रियं गृहारामलतागृहाधिकाम् ॥ ॥ ५ ॥

---

छाया — (1) तर्हि एहि,
(2) तदा अन्यमानसया मयापि न दृष्ट एषः,

---

सर्वोऽप्यपह्नुतः । बह्वपहारि सर इदं पश्यतोहरमिति साकूतमपराधभूयस्त्वं विवृतं । यद्वा – पूर्वं राजासन्निधानकाले अबलाया ममांगुलीयकं चोरवदपह्नुतं । अधुना राजसन्निधानात्परिश्रमोऽपह्नुतः । दण्डनभिया वा, पुरा कृतापराधापनोदनेच्छया वा अस्माकमध्वपरिश्रान्तिमपह्नुत्य शुश्रूषा कृतेत्याशयः ।

॥ तदेति ॥ अन्यमानसया त्वद्गतमानसया। अहो इत्याश्चर्ये, आश्चर्यनिदानं च कृत्रिमवनोद्देशरामणीयकापेक्षयाऽत्र रामणीयकाधिक्यमेव, तदेवोपपादयति ॥ लतेति ॥ अयं श्लोकः शुद्धान्तदुर्लभमिति श्लोकार्थं स्मारयति । अत्र दुष्यन्तः लतागृहवर्णनेन पत्न्या स्स्वयंग्रहाश्लेषसुखं कामयमान इव प्रतिभाति । "लता यथेच्छं परिरभ्य शाखिनः" इत्यारभ्य, "श्रियं गृहारामलतागृहाधिकां" इत्यन्तेन, कन्यादानापेक्षया स्त्रिया गान्धर्वविवाह एव प्रशस्तः, इति पुरावृत्तं शकुन्तलापरिणयं प्रस्तौति ।

शकुन्तला — (1) जाद, पेक्ख, एत्थ पक्खिणिअरो कळरवं विहरन्तो आहिण्डइ ।

राजा — साधु दर्शितं —

तरुविटपतटेषु पक्षिणोऽमी
कलमधुरस्वरदर्शितात्मतोषाः ।
भवनकनकपञ्जरेषु पुष्टात्
ननु रुचिरा विचरन्ति पत्रिणोऽपि ॥ ६ ॥

शकुन्तला — (2) अदो एव्व मह अहिळासो वणवासम्मि ।

सूतः — पश्यत्वायुष्मान्

वाजिनः प्रजविनो गतिमान्द्यात्
लज्जिता इव विनामितशीर्षाः ।
फूत्कृतिप्रकटितामितरोम्णाः
प्रग्रहान्कटकटेति दशन्ति ॥ ७ ॥

राजा — विमुक्तप्रग्रहो भव । (सूतः तथा करोति)

---

छाया — (1) जात, पश्य, अत्र पक्षिनिकरः कलरवं विहरन्नाहिण्डते,
(2) अत एव ममाभिलाषो वनवासे ।

---

॥ साध्विति ॥ दर्शनीयं दर्शितमित्यर्थः । दर्शनीयत्वमेवोपपादयति ॥ तरुविटपेति ॥ अत्र स्वेच्छाचारिणां पक्षिणां सानन्दरुझारदर्शनेन, नगरवासिनां परप्रेष्याणामापातसुखमेव, न स्वेच्छासञ्चारसुखमिति "भवनकनकपञ्जरेषुपुष्टात्" इत्यादिना विवृतं । अत एवोपरि शकुन्तलया एतच्छ्लोकद्वयार्थं मनसि निधाय "अत एव ममाभिलाषो वनवासे" इत्युक्तं । शकुन्तैर्वने परिपालिता शकुन्तला जन्मभूमावेवाभिमानं प्रकटयन्ती लोके स्त्रीणां जननभूमावेवाभिनिवेशः, इति सूचयति ।

॥ वाजिन इति ॥ स्वभावतो धावनशीलानामुत्तमाश्वानां सारथिना स्वसौकर्यानुगुणं गतिमान्द्यकरणे मन्दगमनाश्वसदृशीकरणेन

राजा — प्रिये,

महीभृत्कान्ताङ्गः फलकुसुमपूर्णो द्विजगणैः
समन्तादुद्घुष्टश्रुतिसुभगनादैः परिवृतः ।
विधातुं सत्कारं तरुपरिजनः कुम्भिकलितः
सुदूरादभ्येति प्रकटितजवो नः खलु पुरः ॥ ८ ॥

शकुन्तला — (1) जाद, अह्माणं मज्झे णिसण्णो होहि ।
(तथाकारयति)

राजा — किमिदं,

शकुन्तला — (सलज्जं) (2) अण्णस्स पुळदो वि अज्जउत्तस्स किं पासवट्टिणी हविस्सं ।

---

छाया — (1) जात, आवयो र्मध्ये निषण्णो भव,
(2) अन्यस्य पुरतो पि आर्यपुत्रस्य किं पार्श्ववर्तिनी भविष्यामि,

---

लज्जितास्तु ते स्वाभाविक्या फूत्कृत्या प्रकटितरोषा इवेति, उत्प्रेक्षा । प्रग्रहान्कटकटेतिदशन्तीत्यत्रापि, निजवेगनिरोधहेतुभूतान्खलीनान्दशन्ती वेत्युत्प्रेक्षा व्यज्यते । अत्राश्वोदन्तेन, तत्र तत्र कलासु व्यापृतानां सभासु प्रकटनावसरेऽवकाशाप्रदानेन स्तम्भनं सन्तापकरं भवेदिति सूच्यते ।

॥ महीभृदिति ॥ कान्ताङ्गः, स्पृहणीयावयवः, पक्षे, “ दूरतः पर्वतो रम्यः ” इतिवत्, मनोहराकारः, महीभृत्, राजा, पर्वतश्च, फलकुसुमपूर्णः, राजपक्षे, भाजननिहितफलपुष्पपूर्णः, पर्वतपक्षे, तरुलतादिप्ररूढफलकुसुमपूर्णः, समन्तादुद्घुष्टश्रुतिसुभगनादैः उद्घुष्टाम्नायश्राव्यघोषैः, पक्षे, उद्घुष्टश्रवणेन्द्रियमनोहरस्वानैः, द्विजगणैः, ब्राह्मणगणैः, पक्षिगणैः, परिवृतः, तरुपरिजनः, तरव इव संघशः परिजना यस्य स तथोक्तः । पक्षे, तरव एव परिजना यस्य स तथोक्तः । कुम्भिकलित; कुम्भाः एषां सन्तीति कुम्भिनः, पूर्णकुम्भविशिष्टा इति यावत् । तैः कलितः । पक्षे गजैः, कलितः । सत्कारं, सपर्यां,

राजा — मुग्धे, नन्वभ्येति पर्वत इत्युक्तं,

शकुन्तला — (सस्मितं) (1) सिलिट्ठवअणेण विप्पलद्धा,

विदूषकः — (2) भरद, पेक्ख, हरिणजूहं।

भरतः — (3) कहिं, हं पेक्खामि (उत्तिष्ठति)

राजा — (अङ्गुल्या निर्दिश्य)

शश्वद्विवल्य निजकण्ठमिमे कुरङ्गाः
भीत्यायतायतचलद्रथदत्तनेत्राः।
धावन्ति संप्लुतिवियद्गमनाः प्रियाभिः
हुङ्कारहूतनिजपोतकृतादराभिः ॥ ९ ॥

---

छाया — (1) श्लिष्टवचनेन विप्रलब्धा ।
(2) भरत. पश्य, हरिणयूथं ।
(3) कुत्र, अहं पश्यामि ।

---

विधातुं, कर्तुं, प्रकटितजवस्सन्, नः पुरः, सुदूरादभ्येति, खलु। अनेन शाकुन्तले मृगानुसारेण धावतामश्वानां वेगप्रकरणं, देवलोकान्मारीचाश्रमे रथावरोहणवेगे भूमिवर्णनप्रकरणं च स्मारिते भवतः। अनेन वृत्तान्तेन, सकुटुम्बमभ्यागता राजभिस्सपरिवारं सपूर्णकुम्भमभ्येत्य कुशलानुयोगपुरस्सरं पूजनीया इति सूच्यते।

॥ सिलिट्ठेति ॥ "श्लिष्टवचनेन विप्रलब्धा" इति वाक्येन लोके कपटानभिज्ञा उत्तमस्त्रियः, साकूतवाक्येपि यथावस्थितार्थविश्वासशालिन्यो भवन्तीति सूच्यते।

॥ शश्वदिति ॥ शाकुन्तले, ग्रीवाभङ्गाभिराममिति मृगधावनप्रकरणं स्मारयति। अत्र मृगाणां भिया स्वरक्षणार्थं गमनेपि, भार्यापुत्राद्यविनाभावेन सह नयनकथनात्, दम्पत्योर्विश्लेषभीरुत्वमुद्भाव्य सदासहभावेन भाव्यमिति सूच्यते।

(भरतः — सवल्गितताल पश्यति)

राजा — काश्यपाश्रम स्सन्निहित इव —

नैसर्गिकं वैरमपास्य जन्तवः
परस्परस्नेहपरा विहारिणः ।
तन्वन्ति पौरात्मसु विस्मयं तपः
प्रभाव एवं ह्यतिलोकवैभवः ॥ १० ॥

शकुन्तला — (सानन्दं) (1) आम, सण्णिहिदो एव्व ।

राजा — (सवैलक्ष्यं) किन्तु खलु, शान्तेऽप्याश्रमपदे परिस्फुरति मे दक्षिणमक्षि ।

शकुन्तला — (2) जइ एव्वं, मह वि दक्खिणं अक्खि पडिप्फुरिदकप्पं एव्व ।

---

छाया — (1) आम, सन्निहित एव,

(2) यद्येवं, ममापि दक्षिणमक्षि परिस्फुरितकल्पमेव ।

---

॥ नैसर्गिकमिति ॥ शाकुन्तले, काश्यपाश्रमे रथागमेपि, " विश्वासोपगमादभिन्नगतयश्शब्दं सहन्ते मृगाः " इति हेमकूटे मारीचाश्रमेपि, " अर्धपीतस्तनं " इत्यादि च स्मारयति । अत्र, सात्विकानां सहवासमहिम्ना, आजन्मवैरिणोपि परस्परसखाभवन्तीति वर्णनेन 'संसर्गजा दोषगुणाभवन्ती " ति सूच्यते ।

॥ किन्तुखल्विति ॥ शाकुन्तले, " शान्तमिदमाश्रमपदं " इत्यादिप्रकरणं स्मारयति ।

॥ जइ एव्वमिति ॥ अत्र, दुष्यन्तदक्षिणाक्षिस्फुरणेन शकुन्तलादक्षिणाक्षिस्फुरणमपि "अर्धो वा एष आत्मनो यत्पत्नी " इति श्रुत्यनुकूलमिति परिस्फुरितकल्पमेवेत्यनेन सूच्यते ।

राजा — कथमिव ।

शकुन्तला — (1) जदो अस्समप्पदेसे अण्णा सवत्ती आअमस्सइ ।

राजा — (समन्दस्मितं) यावदपि सम्पादयसि ?

शकुन्तला — (2) संन्ति खु संपादेदुं अणसूआप्पिअंवदाओ ।

विदूषकः — (3) वअस्स, परिचिदो विअ एसो देसो ।

राजा — अथकिं, अयमाश्रमपर्यन्तप्रदेशः

सान्द्रप्ररूढवृक्षो विकीर्णभोग्यप्रसूननिकरश्च ।
स्वयमाश्रमोपकण्ठो वितनोत्यातिथ्यमतिथिसङ्घाय ॥ ११ ॥

शकुन्तला — (4) (सानुनयं) अज्जउत्त, हं एआइणी अस्समं प्पविसिअ अदक्किआअमणेण संतोसइस्सं सहीजणं ।

राजा–भवत्येव प्रथममनुभवतु स्निग्धजनप्रथमदर्शनानन्दं । वयं तु तपोवनोद्देशविलोकनेन विनोदितमानसा यावदनन्तरं प्रविशामः । सारथे, रथ्यान्विगतश्रमान्कुरु ।

---

छाया — (1) यत आश्रमप्रदेशे, अन्या सपत्नी, आगमिष्यति,
(2) स्तः खलु, सम्पादयितुमनसूयाप्रियंवदे,
(3) वयस्य, परिचित इवैष देशः,
(4) आर्यपुत्र, अहमेकाकिनी आश्रमं प्रविश्यातर्कितागमनेन सन्तोषयिष्यामि सखीजनं ।

---

॥ सान्द्रप्ररूढेति ॥ अत्र परिकरालङ्कारानुगुणमाद्यं विशेषणद्वयं । लोके तावदतिथीनां मार्गश्रमापहार्युपचारस्त्वासनभोज्यपुष्पादिभिर्निर्वर्त्यते । तथात्रापि छायातरुप्रदेशं, मधुफलादिभोज्यजातं, पुष्पाद्यलङ्कारं च, आश्रमोपकण्ठस्तनोतीति भावः । अनेन, परार्थैकवस्तुभरितेनाश्रमेण "परोपकारार्थमिदं शरीरं, इति सूच्यते ।

राजा — एते हि,

खरकिरणखरातपातितप्ता
श्श्रमजलमुष्टनिसर्गगात्रवर्णाः।
मुखगलदवदातफेनपिण्डाः
द्रुतपृथुलोछ्वसनै वंदन्ति खेदम् ॥ ॥ १२ ॥

(सर्वे — रथादवतरन्ति) (सूतः— रथेन निष्क्रान्तः)

राजा — पारिभद्र, फलकुसुमभाजनमादाय देवीमनुव्रज, वयस्य, कथं भवान् ?

विदूषकः—( स्वशिरः परामृशन् ) (1) सण्णिहिदा मज्झह्नवेळा भोअण, णहि, णहि, भाणुवंदणं कादव्वं।

राजा — (सस्मितं) मास्तु कथाविस्तरः।

विदूषकः— (2) कहिं गंतुकामो तुमं।

राजा — उक्तं हि।

विदूषकः— (3) गच्छदु भवं हं देविं अणुगच्छामि।

राजा — यथारोचते भवते (परिक्रामति)

---

छाया — (1) सन्निहिता मध्याह्नवेला, भोजन, नहि, नहि, भानुवन्दनं कर्तव्यं,
(2) कुत्र गन्तुकामस्त्वं,
(3) गच्छतु भवान्, अहं देवीमनुगच्छामि,

---

॥ खरकिरणेति ॥ रथ्यैरेतैर्वाचानुक्तेपि श्रान्तानामेतेषांस्वाभाविक्या स्थित्या श्रमः कथितप्राय एवेत्याशयः। पारिभद्रेति कन्चुकिनो नाम। कथं भवानिति प्रश्नस्य, किं मामनुव्रजसि, उत शकुन्तलामित्याशयः।

विदूषकः — (1) चिट्ठ चिट्ठ महावह्मणोहं अणुरूवेण संमाणेण प्पवेसणिज्जो, ता तुए एव्व अणंदरं अस्समं प्पविस्सइस्सं

राजा — तथा (माढव्येन निष्क्रान्तः)

कञ्चुकी — (भरतमादाय फलकुसुमपाणिः) इत इतो देवी, इद-माश्रमपदं।

शकुन्तला — (सविस्मयं) (2) चिळादो दिट्ठो अस्समो अण्णो विअ (परितो विलोक्य) किण्णु खु ण कोवि।

कञ्चुकी — पश्यतु देवी, पर्णशालाजिरे कोपि बालकः हरिण-पोतेन क्रीडन्नास्ते।

शकुन्तला — (3) (सानन्दं) कस्स एसो, (परिक्रामति)

(ततः प्रविशति यथानिर्दिष्टो बालकः)

बालकः — (4) गिहीदो सि, दाणिं किं करेसि, (परिस्फुरन्तं हरिणपोतकं कण्ठे गृहीत्वा) एत्थ णहि तुह अज्जू, दाणिं किं करेसि, (बलात्तन्मुखं गृहीत्वा चुम्बति)

शकुन्तला — (उपसृत्य) (5) जाद, कों तुमं।

---

छाया — (1) तिष्ठ. तिष्ठ. महाब्राह्मणोहं, अनुरूपेण सम्मानेन प्रवेशनीयः, तस्मात्त्वयैवानन्तरमाश्रमं प्रवेक्ष्यामि,

(2) चिरादृष्ट आश्रमोऽन्य इव, किन्तु खलु न कोपि,

(3) कस्यैषः,

(4) गृहीतोसि, इदानीं किं करोषि, अत्र नहि तवाम्बा इदानीं किं करोषि ?

(5) जात, कस्त्वं,

---

देव्या सहाश्रमप्रवेशे, स्वानुगुणसत्कारालाभमाशङ्क्याह । चिट्ठ चिट्ठेति ।

बालकः – (1) मह अंबाए पुत्तओ।

शकुंतला — (2) (समन्दस्मितं) तुह अंबाए णामहेअं किं।

बालकः— (3) मह अंवात्ति।

(शकुन्तला — बालकमादाय परिचुम्बति)

(भरतः— अवतीर्यं हरिणपोतं गृह्णाति)

बालकः—(4) हूं मह हळिणपोदओ, (वेष्टमानो बलादवस्रंसनेनावतीर्य तिष्ठति)

कञ्चुकी— अहो बालस्योक्तिर्निसर्गरमणीया, एवं किल सर्वत्र।

भरतः — (बालकमुपसृत्य) (5) अह्माणं दोह्णं वि एसो।

बालकः— (6) को तुमं।

भरतः — (7) सउंदळाए पुत्तओ।

बालकः— (8) का सउंदळा।

---

छाया — (1) ममाम्बायाः पुत्रकः,

(2) तवाम्बाया नामधेयं किं,

(3) ममाम्बेति,

(4) हूं मम हरिणपोतकः,

(5) आवयोर्द्वयोरप्येषः,

(6) कस्त्वं,

(7) शकुन्तलायाः पुत्रकः,

(8) का शकुन्तला,

---

बालस्वभावदत्तोत्तरश्रवणजनितानन्दातिशयेन, शकुन्तला, बालकमादाय परिचुम्बति।

॥ अह्मो इति ॥ अहो इत्याश्चर्ये, जगद्विदितां शकुन्तलां किं त्वं न जानासि ? महदिदमाश्चर्यमितिभावः।

भरतः — (1) (सहासं) अह्मो, तुमं ण जाणासि सउंदळं ? पेक्ख, (अंगुल्या दर्शयति)

बालकः— (2) (शकुन्तलां विलोक्य) किं तुमं एव्व सउंदळा।

कञ्चुकी — रमणीय स्संलापः।

शकुंतला — (3) (सस्मितं) हं तुह अंबा —

बालकः —(4) णहि तुमं मह अंबा, (भरतमुपसृत्य) देहि पोदअं,

भरतः — (सधाष्टर्य्यं) (5) पेक्ख अंब,

शकुन्तला — (6) जाद दावेमि, कहेहि कहिं तुह अंबा।

बालकः — (7) माळिणिं गदा, (सदैन्यं) दावेहि,

शकुन्तला — (8) जाद भरद, देहि तस्स,

भरतः — (9) (सशिरश्चालनं) ण खु हं देमि,

---

छाया — (1) अहो, त्वं न जानासि शकुन्तलां, पश्य,
(2) किं त्वमेव शकुन्तला ?
(3) अहं तवाम्बा,
(4) नहि त्वं ममाम्बा, देहि पोतकं,
(5) पश्याम्ब,
(6) जात, दापयामि, कथय, कुत्र तवाम्बा,
(7) मालिनीं गता, दापय,
(8) जात, भरत, देहि तस्मै,
(9) न खल्वहं ददामि,

---

॥ पेक्खेति ॥ मत्पाणिगतं हरिणार्भकमयं याचते, पश्याम्बेत्याशयः।

बालकः — (1) (भरतमनुसृत्य) मह अंबा फळं आणीअ देदि, तुह वि देमि, णं देहि ।

शकुन्तला —(2) (सप्रेम) हं एव्व तुह फळं देमि (कञ्चुकिहस्तादेकं फलमादाय ददाति)

बालकः — (3)मह हळिणपोद्‌अस्स अद्धं विभजेहि, (निर्यातयितुमिच्छति)

शकुन्तला — (4) (सवैलक्ष्यं) तस्स अण्णं देमि, एदं तुमं खज्जेहि,

भरतः — (5) कीळह्म, आआहि, (बालकमाकर्षति) ।

बालकः —(6) (नेपथ्याभिमुखमवलोक्य) हं, मह अंबा तित्थं गेह्णिअ आअच्छइ ।

शकुन्तला — (7) (नेपथ्याभिमुखमवलोक्य) का एसा, छाआए अणसूआ विअ ।

---

छाया — (1) ममाम्बा फलमानीय ददाति, तेपि ददामि, एनं देहि,
(2) अहमेव ते फलं ददामि,
(3) मम हरिणपोतकायार्धं विभज,
(4) तस्यान्यद्ददामि, एतत्त्वं खाद,
(5) क्रीडावः, आयाहि,
(6) हं ममाम्बा तीर्थं गृहीत्वाऽऽगच्छति ।
(7) कैषा, छायया अनसूयेव,

---

॥ मह अंबेति ॥ अनेन तापसानुगुणा शालीनता प्रदर्शिता ।

॥ मह हळिणेति ॥ अनेन "एकस्स्वादु न भुञ्जीत" इति सूचितं ।

॥ कीळह्मेति ॥ अनेन भरतस्य फलादिष्वौदार्यं प्रकटीकृतम् ।

वालकः — (1) अणसूआ णहि, मह अंबा ।

(ततः प्रविशति वामकटिसमारोपिततीर्थकलशा अनसूया)

अनसूया —(2)(शकुन्तलां विलोक्य सवैलक्ष्यं) किण्णु खु (स्तम्भीभूय तिष्ठति)

शकुन्तला — (3) (सगम्भीरमन्दस्मितम्) हं,

अनसूया — (4)(बाष्पाविलमक्षि विस्तार्य) हळा प्पिअंवदे, प्पिअंवदे, कहिं सी ।

शकुन्तला — (5) कहिं सा,

अनसूया — (6) कहं सउंदळा विअ, (ससम्भ्रमं निष्क्रान्ता)

वालकः — (7) (सदैन्यं) अंब, मह हळिणपोदअं एसो गिह्नादि, (निष्क्रान्तः)

---

छाया — (1) अनसूया नहि, ममाम्बा,
(2) किन्नु खलु,
(3) अहं,
(4) हळा प्रियंवदे, प्रियंवदे, कुत्रासि,
(5) कुत्र सा,
(6) कथं, शकुन्तलेव,
(7) अम्ब, मम हरिणपोतकमेष गृह्णाति,

---

॥ किण्णु खु इति ॥ अतर्कितागतशकुन्तलादर्शनजनितोत्कटानन्द-विस्मयवशीकृतहृदया, इतिकर्तव्यतामूढा स्तम्भीभूय तिष्ठतीयाशयः ।

॥ हळेति ॥ प्रत्यक्षे स्थितां शकुन्तलां प्रति कुशलानुयोगे कर्तव्ये, निरतिशयानन्दपरवशतया प्रकृतमुचितमपि विस्मृत्य सख्या सहानुभोक्तव्योयमानन्दः, इति मनसि कृत्वा, हळा प्पिअंवदे, इत्याह्वयति । सम्भ्रमातिशयेन द्विरुक्तिः ।

शकुन्तला — (1) अच्चरिअं, पेम्मं णाम किं वा ण करेइ,

(नेपत्थ्ये) (2) कहिं, अवि णाम सच्चं,

(ततः प्रविशत्यनसूया प्रियंवदया सह)

अनसूया — (3) किं असच्चं कहेमि,

(प्रियंवदा — विलोक्य विवर्णवदना निर्निमेषा तिष्ठति)

शकुन्तला — (4) (सगद्गदं) किण्णु खु, का एसा ?

प्रियंवदा — (5) (सबाष्पं) मंदभाइणी हं एव्वं पुच्छिदव्वा संउत्ता, (शकुन्तलायाः कण्ठमाश्लिष्य तदंसदेशे मुखं निवेश्य बाष्पमुत्सृजति)

---

छाया — (1) आश्चर्यं, प्रेम नाम किं वा न करोति,

(2) कुत्र, अपि नाम सत्यं,

(3) किमसत्यं कथयामि,

(4) किन्नु खलु, कैषा,

(5) मन्दभागिन्यहमेवं प्रष्टव्या संवृत्ता,

---

॥ अच्चरिअं इति ॥ सर्वमपि करोतीत्यर्थः, इदानीन्तु प्रेमातिशयेन, अनिर्वचनीयमनुभवैकवेद्यमितिकर्तव्यतामौढ्यमुत्पादितमिति भावः ।

नेपथ्ये, सम्भ्रमातिशयेनागच्छन्त्याः प्रियंवदायाः प्रश्नः, ॥ कहिं, इति ॥ असम्भावितं शकुन्तलागमनमनुचिन्त्य पृच्छति । 'अविणाम-सच्चं' इति ।

॥ मंदभाइणीति ॥ अहमेवं 'कैषेति' प्रष्टव्या संवृत्तास्मि, अत एव मन्दभागिनी । पुरा किल प्रियंवदामन्तरा क्षणमपि न त्वया स्थितं, तादृश्यहमिदानीं कैषेति पृच्छन्त्या भवत्या विस्मृतकल्पैवेत्याशयः । प्रियंवदायाश्शिरः परामर्शः तत्रप्रीत्यतिशयद्योतकः । एव्वं णामेति, अनसूयोक्तस्योत्तरं ।

शकुन्तला — (1) हळा, अणसूए, एहि दाव, तुमं वि कंठ-ग्गहेण मं आणंदेहि, (अनसूयामालिंग्य चेलाञ्चलेन प्रियंवदाया बाष्पं प्रमार्ष्टि)

अनसूया — (2) (साक्षररिंखणं) किं वि भणिदुं वि ण प्पसरइ जीहा,

शकुन्तला — (3) (प्रियंवदायाशिरः परामृशन्ती) एव्वं णाम पेम्मकज्जं ।

(बालकः — ससम्भ्रमं प्रविश्यानसूयाया वल्कलाञ्चलं गृह्णाति)

शकुन्तला — (4) अणसूए, कस्स एसो आणंदग्गंधी इमस्स पिदुणो णामहेअं किं । (अनसूया — सलज्जं शिरोनमयति)

शकुन्तला — (5) (प्रियंवदाया मुखमुन्नमय्य) प्पिअं मे, प्पिअं मे, दिट्ठिआ गुव्विणी संउत्ता सि, अणसूए, प्पिअंवदाए वल्लहो को ।

अनसूया — (6) (समन्दस्मितं) सारद्दतो,

---

छाया — (1) हळा, अनसूये, एहि तावत्, त्वमपि कण्ठग्रहेण मामानंदय,
(2) किमपि भणितुमपि न प्रसरति जिह्वा,
(3) एवं नाम प्रेमकार्यं,
(4) अनसूये, कस्यैष आनन्दग्रन्थिः, अस्य पितुर्नामधेयं किं,
(5) प्रियं मे, प्रियं मे, दिष्ट्या गुर्विणी संवृत्तासि, अनसूये प्रियं-वदाया वल्लभः कः,
(6) शारद्वतः,

---

॥ आणंदग्गंधीति ॥ आनन्दग्रन्थिः, पुत्र इत्यर्थः । भवभूति-नाप्युक्तं "आनन्दग्रन्थिरेकोयमपत्यमितिपठ्यते" इति ।

शकुन्तला — (1) (सस्मितं) तुह वल्लहो किं संगरवो.

(अनसूया — सस्मितमवनमितशीर्षा वल्कलाञ्चलाद्बालकं मोचयति)

प्रियंवदा — (2) (निर्वर्ण्य) राअउळसरिसेण गंभीळत्तणेण अण्णारिसी संउत्ता सउंदळा, ताए व्वाहरिदुं वि ळज्जा बाहेइ,

शकुन्तला — (3) तुमं वि गुव्विणी लावण्णमई रूवेण अधिक्कंतरइसुंदेरा संउत्ता सि, ता तुए व्वाहरिदुं हं वि जिहिरेमि,

प्रियंवदा — (4) (समन्दस्मितं) किं एदं, अणिवेइआअमणं,

शकुन्तला — (5) चिळदिट्ठाणं तुह्माणं दंसणेण अप्पाणं सफळेदुं,

भरतः — (6) (अनसूयां प्रदर्श्य) अंब, का एसा, हेमऊडे आसि तावसी, सा विअ दीसइ,

शकुन्तला — (7) एसा वि सा विअ,

---

छाया — (1) तव वल्लभः किं शार्ङ्गरवः,

(2) राजकुलसदृशेन गाम्भीर्येणान्यादृशी संवृत्ता शकुन्तला, तया व्याहर्तुमपि लज्जा बाधते,

(3) त्वमपि गुर्विणी लावण्यमयी रूपेणातिक्रान्तरतिसौन्दर्या संवृत्तासि, तस्मात्वया व्याहर्तुमहमपि जिह्रेमि

(4) किमेतत्. अनिवेदितागमनं,

(5) चिरदृष्टानां युष्माकं दर्शनेनात्मानं सफलयितुं,

(6) अम्ब, कैषा, हेमकूटे आसीत्तापसी, सेव दृश्यते,

(7) एषापि सेव,

---

सस्मित मित्यादिना, स्त्रीणां पतिनामग्रहण जन्यलज्जाकार्यमुक्तं ।

प्रियंवदा — (1) अज्जस्स मारीचस्स च्छत्तण गाळवेण पुव्वं भणिदं, सुहप्पसूदपुत्तआ सउंदळा णिअवळ्ळहेण संगदा त्ति। अचरिअं। तइआ अंगुळीअअं वि तुह प्पडिऊळं संउत्तं। तदो पुणो वि कहं विअ तुह वळ्ळहेण समाअमो जादो ?

शकुन्तला — (2) (दीर्घं निश्वस्य) तत्थ भणिदव्वं बहु वट्टइ, अणंदरं सवित्थरं कहइस्सं, कहिं अह्माणं तादकस्सवो, अज्जगोदमी अ कहिं,

प्रियंवदा — (3) तादकस्सवो मज्झह्णकरणिज्जं कम्मं कादुं माळिणिं गदो, अज्जगोदमी उण प्पचळिदुं वि असमत्था अब्भंतरम्मि वट्टइ,

शकुन्तला — (4) ता अब्भंदळं एव्व गदुअ ताए अज्जाए प्पणामं कळिस्सं, (निष्क्रान्तास्सर्वे)

---

छाया — (1) आर्यस्य मारीचस्य छात्रेण गालवेन पूर्वं भणितं, सुखप्रसूतपुत्रका शकुन्तला निजवल्लभेन सङ्गतेति आश्चर्यं, तदाङ्गुलीयकमपि तव प्रतिकूलं संवृत्तं, ततः पुनरपिकथमिव तव वल्लभेन समागमो जातः ?

(2) तत्र भणितव्यं बहु वर्तते, अनन्तरं सविस्तरं कथयिष्यामि, कुत्रास्माकं तातकाश्यपः, आर्यगौतमी च कुत्र,

(3) तातकाश्यपो मध्याह्नकरणीयं कर्म कर्तुं मालिनीं गतः आर्यगौतमी पुनः प्रचलितुमप्यसमर्था अभ्यन्तरे वर्तते,

(4) तर्हि, अभ्यन्तरमेव गत्वा तस्यै आर्यायै प्रणामं करिष्यामि,

---

॥ दीर्घं निश्वस्येति ॥ पुरानुभूतक्लेशपरम्परास्मरणेन दीर्घनिश्वासः

भावोल्लासिनीसमाख्यायां व्याख्यायां प्रथमोऽङ्कः



श्रीः

# अथ द्वितीयोऽङ्कः

(ततः प्रविशत्युपविष्टा गौतमी)

गौतमी — (1) (सजृम्भं) प्पिअंवदे, प्पिअंवदे, कहिं सि,

(सरभसं प्रविश्य) बालकः — (2) (उपरि निपत्य) वुड्ढे, तुमं पेक्खिदुं काvi आअच्छइ,

गौतमी — (3) (हुकुर्वंती) जाद, मा पीडेहि, उट्ठेहि,

बालकः — (4) (प्रसुप्तं हरिणार्भकमानीय) पेक्खदु होदी (दर्शयति)

गौतमी — (5) ताद, कुदो तं पीडेसि विसज्जेहि अंबाए सआसं

बालकः — (6) हूं णाहं मुञ्चामि, (अंसमारोप्य नृत्यति)

गौतमी — (7) तुमं साळीणो णहि (स्तोकमुच्चैः) अणसूए, कहिं सि, णेहि दुट्ठं णं,

---

छाया — (1) प्रियंवदे, प्रियंवदे, कुत्रासि,

(2) वृद्धे, त्वां प्रेक्षितुं काप्यागच्छति,

(3) जात, मा पीडय, उत्तिष्ठ,

(4) पश्यतु भवती,

(5) तात, कुतस्तं पीडयसि, विसृजाम्बायास्सकाशम्.

(6) हूं नाहं मुञ्चामि,

(7) त्वं शालीनो नहि, अनसूये, कुत्रासि नय दुष्टमेनं,

(ततः प्रविशति सह सखीभ्यां शकुन्तला)

शकुंतला — (1) (विलोक्य) अह्मो, एसा गोदमी
जिण्णा पिंडिअगत्ती पळिआउळमत्थया दाणिं।
दंतेहिं सुण्णमुही वळितिळअतळंगिअंगआ एसा ॥ १ ॥

अनसूया — (2) जदा तुमं उज्झिअ प्पडिणिउत्ता तदा प्पहुदि अचिळादो एव्व एव्वं संउत्ता,

प्रियंवदा — (3) तुह प्पच्चादेसं सुमरिअ, सुमरिअ, बाहाउळा आसि,

---

छाया — (1) अहो, एषा गौतमी,
जीर्णा पिण्डितगात्री पलिताकुलमस्तकेदानीम् ।
दन्तैश्शून्यमुखी वलितिलकतरङ्गिताङ्गकैषा ॥ १ ॥
(2) यदा त्वामुज्झित्वा प्रतिनिवृत्ता तदाप्रभृति अचिरादेवैवं संवृत्ता,
(3) तव प्रत्यादेशं स्मृत्वा स्मृत्वा बाष्पाकुलाऽऽसीत्,

---

पूर्वापेक्षया शरीरपरिणामविषेषावलोकनेन, अहो, इत्याश्चर्यं अत एव काक्वा, एषा गौतमीत्युक्तं । एषा गौतमी किमित्यर्थः । शरीर-परिणामविशेषमेवाह । ॥ जिण्णेति ॥ इदानीमत्यन्तजीर्णेत्यर्थः । ॥ पिण्डितगात्री ॥ पुरा जरया कुब्जाऽऽसीत्, इदानीन्तु, पिण्डाकृतिस्संवृत्ता । पलिताकुलमस्तकेदानीं ॥ पूर्वं तिलतण्डुल-कल्पनीलशुक्लकेशसंवलितशीर्षाऽवर्तत, इदानीं, केवलशुक्लकेशावगुण्ठित-मस्तका वर्तते । दन्तैश्शून्यमुखी । पूर्वमास्ये विरलास्तरलाश्च कतिपये दन्ता आसन्, इदानीं, तेपि न सन्ति । वलितिलकतरङ्गि ताङ्गका । अङ्गकेति अल्पार्थे कन्प्रत्ययः, कृशतया अत्यल्पावयवेत्यर्थः, पूर्वं यत्किञ्चि-न्मांसलतया वलयः, तिलकानि च नासन् । इदानीं, वलितिलक तरङ्गिताङ्गका । अत एव, अहो, इत्युक्तं ।

4

शकुन्तला — (1) (सबाष्पं) अणुकंपणिज्जा अज्जा, ताए मइ प्पेम्मं एव्वं,

प्रियंवदा — (2) (सहसोपसृत्य उच्चैः) सउंदळा आअदा,

गौतमी — (3) अंब, किं (कण्ठमुदस्य पश्यति)

( प्रियंवदा—पुनरपि तदेव वदति )

गौतमी — (4) (सहर्षं) कहिं,

शकुन्तला — (5) (उपसृत्य) सउंदळा हं वंदामि (प्रणमति)

गौतमी — (6) (भ्रूदेशे पाणिं वलभीकृत्य निर्वर्ण्य) एहि जादे, (पार्श्वे समुपवेश्य) दिट्ठिआ चिळदिट्ठासि। ळाळणिज्जं तुमं एआइणिं तत्थ उज्झिअ क्कूरहिअआ हं आअदा, पुणो वि पेक्खिस्सं वा णवा त्ति,

शकुन्तला — (7) तुह्माणं अणुग्गहादो सव्वं सुहंतं संउत्तं,

गौतमी — (8) होदु जादे, होदु, कहं वळ्ळहेण समाअमो,

---

छाया — (1) अनुकम्पनीया, आर्या, तस्या मयि प्रेमैवं,

(2) शकुन्तलाऽऽगता,

(3) अम्ब, किं ?

(4) कुत्र ?

(5) शकुन्तलाऽहं वन्दे,

(6) एहि जाते, दिष्ट्या चिरदृष्टासि, लालनीयां त्वामेकाकिनीं तत्रोज्झित्वा क्रूरहृदयाहमागता, पुनरपि द्रक्ष्यामि वा न वेति,

(7) युष्माकमनुग्रहात्सर्वं सुखान्तं संवृत्तं,

(8) भवतु जाते, भवतु, कथं वल्लभेन समागमः,

शकुन्तला — (1) राएसिणा प्पच्चादिट्ठा हं अच्छराए मेणआए हेमऊडं णीदा,

गौतमी — (2) (सवैलक्ष्यं) दुहिदुवच्छळो खु इत्थिआजणो, तदो,

शकुन्तला — (3) तत्थ तादकस्सवेण विअ अज्जमाळीचेण पोसिदा,

गौतमी — (4) ळोए किं सव्वो वि दुस्संतसरिसो,

शकुन्तला — (5) किण्णु खु, सअंकिदावळाहे, राएसिं उवाळहसि,

गौतमी — (6) (सस्मितं) होदु, होदु, दाणिं हं अण्णा संउत्ता खु,

---

छाया — (1) राजर्षिणा प्रत्यादिष्टाहमप्सरसा मेनकया हेमकूटं नीता,

(2) दुहितृवत्सलः खलु स्त्रीजनः, ततः,

(3) तत्र तातकाश्यपेनेवार्यमारीचेन पोषिता,

(4) लोके किं सर्वोपि दुष्यन्तसदृशः,

(5) किन्नु खलु, स्वयंकृतापराधे राजर्षिमुपालभसे,

(6) भवतु, भवतु इदानीमहमन्या संवृत्ता खलु,

---

दुष्यन्तसदृशइति, दयाशून्य इत्यर्थः, स्वपरित्यागिनोपि पत्युर्दूषण मसहमाना वदति ॥ किण्णु खु इत्यादि ॥ यदि दर्शितं स्यादङ्गुलीयकं तदा मांनैव त्यजेत्सराजर्षिः । न खलु दर्शितं मया । अत एव परित्यक्ता भवं तेन, तन्मदीय एवापराधः, इति भावः ।

॥ होदु इति ॥ परिहासोक्तिरियं । अन्या, बाह्येत्यर्थः ।

शकुन्तला — (1) (सलज्जं) बुड्ढे, अळं पडिहासेण,

गौतमी — (2) एदं एव्व अहिळसइ दुहिदुवंधुजणो, तदो,

शकुतन्ला —(3) जुद्धसाहिअणिमित्तं सुरळोअं, गदो, अज्ज-
उत्तो जअसीळो मज्झेमग्गं हेमऊडं आअदो,

भरतः — (4) (शार्दूलशिशुमादाय सरभसं प्रविश्य) मा एव्व देहि
तं, मह हत्थे पेक्ख, एदं (सस्मितं दर्शयति)

बालकः —(5) अंव पेक्ख, एसो सद्दूळपोदअं गेह्णिअ आअदो,

शकुन्तला — (6) (सहसोत्थाय) हंहो, मुंच मुंच, इमस्स मादा
ळंघेइ,

भरतः — (7) (सस्मितं) इमस्स अंबाए भणिअ एव्व आणीदो
एसो, (सर्वे हसन्ति)

---

छाया — (1) वृद्धे, अलं परिहासेन,

(2) एतदेवाभिलषति दुहितृबन्धुजनः, ततः,

(3) युद्धसाह्यनिमित्तं सुरलोकं गत आर्यपुत्रो जयशीलो मध्येमार्गं
हेमकूटमागतः,

(4) मैव देहि तं, मम हस्ते पश्यैतत्,

(5) अम्ब, पश्य एष शार्दूलपोतकं गृहीत्वाऽऽगतः,

(6) हंहो, मुञ्च, मुञ्च, अस्य माता लङ्घते,

(7) अस्याम्बाया भणित्वैवानीत एषः,

---

॥ तमिति ॥ हरिणपोतकमित्यर्थः ।

॥ इमस्सेति ॥ अस्य मातुरपि न मे भीतिरिति भावः ।
तत्थवि हेमऊडे एव्वं एव्वेत्यनेन, सिंहशिशुना सह क्रीडादिकमुक्तं ।
शकुन्तलया दोषत्वेनोक्तं, प्रियंवदा, गुणत्वेन वक्ति ।

शकुन्तला — (1) (तस्य हस्ताच्छार्दूलशिशुं विमोच्य) तत्थ वि हेमऊडे एव्वं एव्व, अदो एव्व, इसिजणेण सव्वदमणेत्ति आहूदो, खणंवि तुह्णिं ण वट्टइ, (इति भरतमादायोपविशति)

प्रियंवदा — (2) एव्वं एव्व वाळाणं स्सहावो, अत्थि खु एसो, (इत्यनसूयायाः पुत्रमादाय चुम्बति)

गौतमी — (3) (भरतमादाय स्वाङ्कमारोप्य शिरः परामृशन्ती) दुस्संतो एव्व आआरेण, कहं सहंति इमस्स विप्पओअं हेमऊडवासिणो,

शकुन्तला — (4) तत्थ सव्वेहिं पत्थाणकाळम्मि वाहाउळलोअणेहिं विसज्जिदो एसो,

प्रियंवदा — (5) को वा इच्छइ ईरिसस्स असण्णिहाणं,

---

छाया — (1) तत्रापि हेमकूटे एवमेव, अत एव ऋषिजनेन सर्वदमन इत्याहूतः, क्षणमपि तूष्णीं न वर्तते,

(2) एवमेव बालानां स्वभावः, अस्ति खल्वेषः,

(3) दुष्यन्त एवाकारेण, कथं सहन्तेऽस्य विप्रयोगं हेमकूटवासिनः,

(4) तत्र सर्वैः प्रस्थानकाले बाष्पाकुललोचनैर्विसर्जित एषः,

(5) को वेच्छति ईदृशस्यासन्निधानं,

---

॥ एव्वं एव्वेति ॥ अस्ति खल्वेषः, अनसूयायाः पुत्रः, अयमपि तूष्णीं क्षणमपि न वर्तते, इत्याशयः। सर्वत्र बालानां स्वभाव एकरीतिः, को वाऽस्मिन्विशेष इति यावत्।

॥ पत्थाणकाळम्मि ॥ हेमकूटात्प्रतिनिवर्तनकाले।

॥ असण्णिहाणं ॥ विरहमितियावत्।

गौतमी — (1) (भरतस्य चुबुकमुन्नमय्य) जाद, तुहप्पासादो रम-
णिज्जो अहवा तवोवणं ?

भरतः — (2) दाणिं एदं एव्व,

शकुन्तला — (3) रज्जं णाम बंधणाआरं, अप्पावि अण्णस्स
आअत्तो,

अनसूया — (4) रज्जं गदाए तुह एक्को हि वच्छरो आसि ?
किण्णु खु एव्वं भणसि ?

शकुन्तला — (5) किं एक्को एव्व, मह उण बहुवच्छरो विअ,
चिळं अस्समेसु ठिदाए, (कञ्चुकिनमाहूय फलकुसुमभाज-
नमादाय) समप्पेहि भअवदो (इत्यनसूयाया हस्ते निक्षिपति)

---

छाया — (1) जात, तव प्रासादो रमणीयः, अथवा तपोवनं,
(2) इदानीमेतदेव,
(3) राज्यं नाम बन्धनागारं, आत्माप्यन्यस्यायत्तः,
(4) राज्यं गतायास्तवैको हि वत्सर आसीत्, किन्तु खल्वेवं
भणसि,
(5) किमेक एव, मम पुनर्बहुवत्सर इव चिरमाश्रमेषु स्थितायाः,
समर्पय भगवते,

---

॥ दाणिमिति ॥ लोके बालानां स्वभाव ईदृशः, यदा यदा
यद्यत्पश्यति, तदा तदा तत्तदेव रमणीयतया भासते ।

गौतमीकृतस्य प्रश्नस्य शकुन्तला, स्वानुभवानुगुणमुत्तरं दत्ते,
॥ रज्जंणामेत्यादि ॥

प्रियंवदा — (1) (विलोक्य) अह्महे, अमुळ्ळं पीदंबळं (आदाय विस्तारयति, पीताम्बराच्चित्रफलकः पतति, सत्वरमादाय) किण्णु खु एदं, (निर्वर्ण्य सविस्मयं) सउंदळे, सा एव्व तुमं, तं एव्व अह्माणं उज्झाणं, सो एव्व णोमाळिआसंगदो सह-आरो, सो एव्व भमरो, वअंपि दुवे, अच्चरिअं, तत्थ वट्टामो विअ,

अनसूया — (2) (निर्वर्ण्य) किण्णु खु, अद्धळिहिदं विअ, अण्णं वि ळिहिदव्वं हुवे,

शकुन्तला — (3) मए ण एव्व दिट्ठं, दंसेहि, पेक्खह्म,

प्रियंवदा — (4) किं, एदं, तुए ण दिट्ठं (दर्शयति)

---

छाया — (1) अहो. अमूल्यं पीताम्बरं, किन्नु खल्वेतत्, शकुन्तले, सैव त्वं, तदेवास्माकमुद्यानं, स एव नवमालिकासङ्गत-स्सहकारः, स एव भ्रमरः आवामपि द्वे, आश्चर्यं, तत्र वर्तामहे इव,

(2) किन्नुखलु. अर्धलिखितमिव, अन्यदपि लिखितव्यं भवेत्,

(3) मया नैव दृष्टं दर्शय. पश्यामः,

(4) किमेतत्त्वया न दृष्टं.

---

॥ अह्महे इति ॥ अदृष्टपूर्वतयाऽऽश्चर्यं ।

॥ किण्णु खु इति ॥ शाकुन्तले, षष्ठाङ्के तक्रेमीत्यादिना विदूष-कोक्तस्सन्दर्भ एवात्रापि प्रदर्शितः ।

॥ किण्णु खु, अद्धळिहिदं विअ इति ॥ शाकुन्तले तत्रैव, कार्या सैकतलीनेत्यादिना, वयस्य, अन्यच्च शकुन्तलायाः प्रसाधनमभि-प्रेतमस्माभिः, इत्यादिना च अर्धलेखनमुक्तं, उत्तरत्रापि नैव पूरितं, अत एव त्रापि, अर्धलिखितमिवेत्युक्तं ।

शकुन्तला — (1) (विलोक्य सस्मितं) चित्तअरेण कुसळेण होदव्वं, केण अहिळिहिदं हवे,

प्रियंवदा — (2) असडक्खीणं एदं उत्तंतं को अण्णो अहिळिहइ,

शकुन्तला — (3) (स्मृतिमभिनीय) आं, सुमरिदं, मेणआणिजुत्ताए साणुमदीए भणिदं, सउंदळं चित्तगदं कदुअ राआ णिउक्कंठं विणोदेइ त्ति,

अनसूया — (4) तंकाळिओ मुद्धहावो सुद्दु ळिहिदो,

शकुन्तला — (5) सा एव्व रमणिज्जा खु दसा,

प्रियंवदा — (6) किं पुणोवि आअच्छइ,

---

छाया — (1) चित्रकरेण कुशलेन भवितव्यं, केनाभिलिखितं भवेत्,
(2) अषडक्षीणमेतं वृत्तान्तं कोऽन्योऽभिलिखति,
(3) आं, स्मृतं मेनकानियुक्तया सानुमत्या भणितं शकुन्तलां चित्रगतां, कृत्वा राजा निजोत्कण्ठां विनोदयति, इति,
(4) तत्कालिको मुग्धभावस्सुष्टु लिखितः,
(5) सैव रमणीया खलु दशा,
(6) किं पुनरप्यागच्छति,

---

॥ असडक्खीणमिति ॥ अत्यन्तरहस्यमिति यावत् ।

॥ आमिति ॥ शाकुन्तले षष्ठाङ्के सानुमत्या "यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि" इत्युक्तं । ततश्च तस्याः उद्भ्रान्तकेन निष्क्रमणं कृतं, स्वसङ्कल्पानुरूपमेव सानुमत्या भणितमिदानीं प्रतिपाद्यते सउंदळमित्यादिना ।

॥ किमिति ॥ सामुग्धदशा, पुनरप्यागच्छति किं, नैवागच्छतीत्यर्थः, तादृशरमणीयदशायाः पुनरागमनं दुर्लभं, गतन्तुगतमेव हीति

गौतमी — (1) किं एदं,

प्रियंवदा — (2) सउंदळाए प्पडिकिदी (ददाति)

गौतमी — (3) (सुचिरं साधु निर्वर्ण्य) जादे, दाणिं कहिं गदं तं कोदूहळं,

प्रियंवदा — (4) (उच्चैः) वुड्ढे, कआ वि ण विसुमरणिज्जं त्ति राएसिणा चित्तम्मि ठाविदं,

गौतमी — (5) (सहासं) सुट्ठु भणिदं,

शकुंतला — (6) कहं विअ इमस्स आअमणं,

---

छाया — (1) किमेतत्,

(2) शकुन्तलायाः प्रतिकृतिः,

(3) जाते, इदानीं कुत्र गतं तत्कौतूहलं,

(4) वृद्धे, कदापि न विस्मरणीयमिति राजर्षिणा चित्रे स्थापितं,

(5) सुष्ठु भणितं,

(6) कथमिवास्यागमनं,

---

यावत्, एतेन गार्हस्थ्ये तावल्लोके सुखत्वभ्रान्तिरेव, वस्तुतः क्लेश-बाहुळ्यमिति सूचितं,

॥ जादे इति ॥ शाकुन्तले प्रथमाङ्के प्रदर्शितदिशा चित्रेऽस्मिन्मौग्ध्यानुगुणकौतूहलविशिष्टा शकुन्तला लिखिता वर्तते, प्रत्यक्षस्थितायां शकुन्तलायान्त्विदानीं गाम्भीर्यं दृश्यते, अत एव दाणिं कहिं गदं' इत्यादिप्रश्नः,

॥ वुड्ढे इति ॥ शरीरस्य वयोनुगुणस्वभावस्य च परिणामशील-त्वात्, तादृशरमणीयदशानाशभिया, कदाप्यविस्मरणीयतया राज्ञा चित्रेऽस्मिन्स्थापितमिति भावः ।

भरतः — (1) अंव, अज्जमाढव्वेण पीदंवळे णिक्खित्तं, मये दिट्ठं,

शकुन्तला — (2) तह हवे,

अनसूया — (3) होदु एदं, सवत्तीजणो कहं,

शकुन्तला — (4) मं दिट्ठिं विअ पेक्खदि,

अनसूया — (5) (सवैलक्ष्यं) अवि णाम सच्चं,

शकुन्तला — (6) किं बहुणा, खणं वि मह अदंसणे सअं एव्व अण्णेसइ, कहिं सउंदळा त्ति,

प्रियंवदा — (7) एव्वं होदुं तुह गुणो एव्व णिदाणं त्ति तक्केमि,

---

छाया — (1) अम्ब, आर्यमाढव्येन पीताम्बरे निक्षिप्तं मया दृष्टं,

(2) तथा भवेत्,

(3) भवत्वेतत्, सपत्नीजनः कथं,

(4) मां दृष्टिमिव पश्यति,

(5) अपि नाम सत्यं,

(6) किं बहुना क्षणमपि ममादर्शने स्वयमेवान्विष्यति कुत्र शकुन्तलेति,

(7) एवं भवितुं तव गुण एव निदानमिति तर्कयामि,

---

इमस्स, अस्य चित्रफलकस्य, ॥ होदु इति ॥ होदु एदं. अनया वार्तयाऽलमिति, भावः, सवत्तीजणो कहं, सपत्नीजनः भवद्विषये कथं वर्तते, इति प्रश्नः ।

॥ ममिति ॥ लोकोक्तिरियं ।

लोके तावदेवं नास्ति सपत्नीविषये स्त्रीजनः, लोकविरुद्धेयं भवदुक्तिः, इत्याश्चर्येण पृच्छति ॥ अवि णाम सच्चमिति ॥

शकुन्तला — (1) इदो प्पत्थाणकाळम्मि जह भणिदं ताद-कस्सवेण, तह एव्व मए अणुट्ठिदं,

अनसूया — (2) अह्माणं प्पिअं एदं सुणिअ,

प्रियंवदा — (3) तवोवणे किलसिदसरीरा दाणिं सुसुहं वट्टसि,

शकुन्तला — (4) किं तं सुहं,

प्रियंवदा — (5) किण्णु खु एव्वं भणसि, रज्जे णिओअमेत्तेण सव्वं प्पचळइ, मत्तंडो कहं वट्टइ त्ति वि ण सुमरिइ, एत्थ एव्वं होदि वा,

---

छाया – (1) इतः प्रस्थानकाले यथा भणितं तातकाश्यपेन, तथैव मयानुष्ठितं,
(2) अस्माकं प्रियमेतच्छ्रुत्वा,
(3) तपोवने क्लेशितशरीरा, इदानीं सुसुखं वर्तसे,
(4) किं तत्सुखं,
(5) किन्तु खल्वेवं भणसि, राज्ये नियोगमात्रेण सर्वं प्रचलति, मार्तण्डः कथं वर्तते, इत्यपि न स्मरति, अत्रैवं भवति वा,

---

॥ इदो प्पत्थाणकाळम्मीति ॥ शाकुन्तले, पतिगृहं प्रति प्रस्थानावसरे, तातकाश्यपेन 'शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः। भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी' इति यथाभिहितं, तथैव मयानुष्ठितं, इत्याशयः।

॥ अह्माणमिति ॥ हन्त, राजानो बहुवल्लभाः, सपत्नीजनमध्ये कथं वर्तते तपोवनवर्धिताऽस्मच्छकुन्तलेति दूयमानमानसा वयमास्म। इदानीमेतच्छ्रुत्वाऽस्माकं प्रियमित्याशयः।

॥ किण्णुखु इति ॥ एव्वं भणसि, सुखाकरमसुखावासं भणसीत्याशयः। सुखाकरत्वमेवोपपादयति, मत्तंडो, इत्यादिना। असूर्यंपश्या राजदाराः। अत्र तपोवने। एव्वं होदि वा, नैव भवतीत्यर्थः।

शकुन्तला —(1) एदं एव्व लोअस्स बालिसत्तणं, रण्णो बाहिअं विहवं पेक्खिअ एव्वं मण्णेइ, अह्माणं णत्थि खु तुह्माणं जारिसं भाअहेअं,

प्रियंवदा — (2) (सस्मितं) अदो एव्व खु विसुमरिदो एसो रण्णजणो, अच्चरिअं, किण्णु खु, एक्को वि लेहो णहि,

शकुन्तला — (3) एव्वं होदुं मह संकप्पो एव्व काळणं,

अनसूया — (4) कीरिसो,

---

छाया — (1) एतदेव लोकस्य बालिशत्वं, राज्ञो बाह्यं विभवं प्रेक्ष्यैवं मन्यते, अस्माकं नास्ति खलु, युष्माकं यादृशं भागधेयं,

(2) अत एव खलु विस्मृत एषोरण्यजनः, आश्चर्यं, किन्तु खलु, एकोपि लेखो नहि,

(3) एवं भवितुं मम सङ्कल्प एव कारणं,

(4) कीदृशः,

---

अत्र तपोवने तृणकाष्ठजलाद्याहरणार्थं स्वयमेव प्रचण्डमार्तण्डातपसञ्चारेण शरीरं क्लिष्टं भवति, प्रासादे तावदेवं नास्ति, किन्तु नियोगमात्रेण सर्वं प्रचलतीति भावः ।

॥ एव्वं एव्वेति ॥ लोकस्य, जनस्य, बालिसत्तणं, मौढ्यमित्यर्थः, रण्णोबाहिअंविहवंपेक्खिअ, राज्ञः, बाह्यं, छत्रचामरवाहनपरिजनादि-विभवं दृष्ट्वा, अन्यजनापेक्षया राजा सुखीति मन्यते, तन्मौढ्यकार्य-मेवेत्याशयः । स्वेच्छाचारिणां तपोवनवासिनां यादृशस्सुखविशेषः तादृशो नैवास्माकमिति भावः । एतदाशयेनैव दुष्यन्तोप्युत्तरत्राह, "नित्यं बन्धश्शृङ्खलामन्तरेण" इति । शाकुन्तलेऽप्युक्तं, सर्वः प्रार्थि-तमर्थमधिगम्य सुखी सम्पद्यते जन्तुः,राज्ञां तु चरितार्थता दुःखान्तरैवेति ।

॥ अदो एव्वेति ॥ परिहासोक्तिरियं ।

शकुन्तला — (1) रज्जे जह, जस्स कस्स वि हिअए खेदो ण हवे, तह पेक्खिदव्वं त्ति,

अनसूया — (2) तादकस्सवेण वि भणिदं, ळेहस्स अणाअमणे ळाअकज्जभरो एव्व काळणं हवे त्ति,

प्रियंवदा — (3) कुदो अणिवेदिअ आअदा,

शकुन्तला — (4) हरिसभरं अणुहोदुं,

प्रियंवदा — (5) तं सच्चं,

शकुन्तला — (6) अण्णं अ, तुह्माणं दंसणकए पुणो पुणो पत्थिदेण अज्जउत्तेण ण समओ णिद्दिट्ठो, किदावराहो विअ अज्जकस्सवस्स मुहं दंसिदुं वि ण पारेमित्ति,

---

छाया — (1) राज्ये यथा यस्य कस्यापि हृदये खेदो न भवेत्, तथा प्रेक्षितव्यमिति,

(2) तातकाश्यपेनापि भणितं, लेखस्यानागमने राजकार्यभर एव कारणं भवेदिति,

(3) कुतोऽनिवेद्यागता,

(4) हर्षभरमनुभवितुं,

(5) तत्सत्यं,

(6) अन्यच्च, युष्माकं दर्शनकृते पुनः पुनः प्रार्थितेनार्यपुत्रेण न समयो निर्दिष्टः, कृतापराध इवार्यकाश्यपस्य मुखं दर्शयितुमपि, न पारयामीति,

---

॥ रज्जे जहेति ॥ एतदर्थं एव शाकुन्तले चतुर्थाङ्के प्रतिपादितः, काश्यपः — वत्से, किमेवं कातरासि अभिजनवतो भर्तुश्श्लाघ्ये स्थिता गृहणीपदे विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला, इत्यादिना ।

॥हरिसभरमिति॥ निवेद्यागमने, एतादृशो हर्षातिशयो नास्तीतिभावः ।

गौतमी — (1) (सस्मितं) दाणिं,

शकुन्तला — (2) मए कहिदो तादकस्सवस्स गुणो,

(ततः प्रविशत्यार्द्रशिखश्शार्ङ्गरवः)

शार्ङ्गरवः — (विलोक्य सहर्षं) किन्नु खलु,, सुरसरितो मर्त्य-लोकावतरणं, (गौतमीवर्जं सर्वा उत्तिष्ठन्ति)

शकुन्तला — (3) (सलज्जं) जेट्ठभादुणो हं वंदामि, (प्रणमति)

शार्ङ्गरवः — सर्वथा भर्तुरभिमता भव,

शकुन्तला — (4) कहिं तादकस्सवो,

---

छाया — (1) इदानीं,
(2) मया कथितस्तातकाश्यपस्य गुणः,
(3) जेष्ठभ्रात्रे अहं वन्दे,
(4) कुत्र तातकाश्यपः,

---

॥ दाणिमिति ॥ किमिदानीं राजा नापराधी क्वगतस्सोपराधः, इति भावः ।

॥ मए इति ॥ यद्यप्यार्यपुत्रो नापराधी, सत्यप्यपराधे शान्तात्मा काश्यपः क्षमिष्यत एवेति काश्यपस्य गुणो मया कथित इत्यभिप्रायः ।

॥ किन्नु खल्विति ॥ सुरसरितोमर्त्यलोकावतरणमित्यनेन, नगरस्य सुरलोकतुल्यत्वं, तपोवनस्य क्लेशप्रायत्वञ्च सूचितं । सुरसरित इत्यनेन, शकुन्तलाया निर्दुष्टत्वं, तपोधनैरपि सादरसेव्यत्वं च सूचितं । मर्त्यलोकावतरणमित्यनेन, इदमागमनमत्यन्तविस्मयानन्दावहमिति-सूचितं ।

॥ सर्वथेति ॥ सर्वप्रकारेणेत्यर्थः । पुरानुभूतं भर्तृकृतपरित्या-गमाशंक्य, पुनरपि कदापि माभूत्तथेति मनसि निधायाह, भर्तुरभिमता भवेति ।

शार्ङ्गरवः — अग्निशरणं प्रविष्टः,

अनसूया — (1) हं कहइस्सं, सउंदळा आअदा त्ति,

प्रियंवदा — (2) पुढमं हं एव्व कहइस्सं, (इति भरतमाददाति, उभे अप्यहमहमिकया निष्क्रान्ते)

शकुतन्ला — (3) (गौतमीमुपसृत्योच्चैः) तादकस्सवो आअदो, गच्छह्म,

गौतमी — (4) जादे, गच्छ तुमं, हं मंदं आअच्छामि,

शकुन्तला — (5) तह, (शार्ङ्गरवप्रदर्श्यमानमार्गा कञ्चुकिना सह निष्क्रान्ता)

(गौतमी — दण्डमवलम्ब्योत्थाय मन्दं निष्क्रान्ता)

---

छाया — (1) अहं कथयिष्यामि शकुन्तलाऽऽगतेति,
(2) प्रथममहमेव कथयिष्यामि,
(3) तातकाश्यप आगतः, गच्छामः,
(4) जाते, गच्छ त्वं, अहं मन्दमागच्छामि,
(5) तथा,

---

भावोल्लासिनीसमाख्यायां व्याख्यायां द्वितीयोऽङ्कः



श्रीः

# अथ तृतीयोऽङ्कः

(ततः प्रविशति विदूषकद्वितीयो राजा)

राजा — (समन्तादवलोक्य) अहो, प्रकृतेः परिणामशीलता,

वृक्षका ये पुरा तेद्य प्रांशवः पीवरोच्छिखाः ।
ये च जीर्णाः पुरा तेऽद्य स्थाणवः कोटराकुलाः ॥ १ ॥

विदूषकः — (1) किं सो एसो रिक्खखंडो, जो पुव्वं ओणद-मुहेण मए दिट्ठो, (मुखमुद्यम्यपश्यति)

राजा — अथकिं, वयस्य, पश्य तपस्विनां यथालाभसन्तुष्टतां,

पर्णैस्सलिलैः कन्दैः प्रवर्तयन्तश्शरीरदिनयात्राम् ।
तरुतलशाद्वलवसतिं बहुमन्यन्ते तपस्वितस्तुष्टाः ॥ २ ॥

---

छाया — (1) किं स एषः वृक्षषण्डः, यः पूर्वमवनतमुखेन मया दृष्टः,

---

॥ वृक्षकाइति ॥ यात्येकतोऽस्तशिखिरमिति, शाकुन्तलोक्तदिशा, कालक्रमेण कस्यचिदुच्छ्रायः, कस्यचिदवनतिरिति ध्वन्यते ।

॥ पर्णैरिति ॥ अनेन, तरुस्थापको जलसेचक एवेति न्यायेनेश्वरसृष्टानां प्राणिनामाहारस्तत्र तत्र सुलभ एव। एवमपि जनाः सिद्ध-मन्नं परित्यज्य दुर्लभेषु, अधिकसुखत्वभ्रान्त्या वृथा मनोरथमात्रेण क्लिश्यन्तीतिव्यज्यते ।

विदूषकः — (1) अळाहे हं वि एव्वं एव्व,

राजा — हुं अनभिज्ञोऽसि, तपस्विनां किंवा दुर्लभं, (सनिर्वेदं) धिगेनं नियन्त्रणशीलं राज्याधिकारं —

अन्यापेक्षा स्वीयकार्ये यथेच्छं
भोक्तुं वक्तुं गन्तुमप्यन्तरायः ।
क्लेशावसो हन्त राज्याधिकारः
नित्यं बन्धश्शृङ्खलामन्तरेण ॥ ३ ॥

विदूषकः — (2) अळं णिव्वेदेण, एदे वि तवोणिअळेण णिअळिदा,

राजा — मैवं, धन्याः खल्वेते,

व्रताङ्कुशवशीकृतप्रबलमत्तचित्तद्विपाः
नियन्त्रितचलाचलप्रथितसर्वबाह्येन्द्रियाः ।

---

(1) अलामेऽहमप्येवमेव,
(2) अलं निर्वेदेन, एतेऽपि तपोनिगडेन निगडिताः,

---

अलाभनिमित्तोऽयं क्लेशानुभवः, इति मनसि निधायाह ॥ अळाहे इति ॥ तपस्विनामिति, तपोमहिम्ना सुखैकाकरं स्वर्गमपि वशीकर्तुं समर्था एते । एवं स्थिते किमु वक्तव्यमैहिकविषयसुखसम्पादने । तथापि वैराग्यबलादैहिकसुखस्यास्थिरत्वधिया, हेयत्वेन च पर्णादिनैव तुष्टा भवन्ति । नत्वलाभात् इति भावः ।

॥ अन्यापेक्षेति ॥ पूर्वार्धं शाकुन्तलोक्तं, "अविश्रामो लोकतन्त्राधिकार" इति प्रकरणं स्मारयति । क्लेशावास इत्युत्तरार्धं 'स्वसुखनिरभिलाषः' इति पूर्वार्धं स्मारयति ।

॥ व्रताङ्कुशेति ॥ इदं वर्णनं 'सुखदुःखे समे कृत्वा' 'यतचित्तेन्द्रियक्रियः' इत्यादि गीतोक्तं योगिस्वरूपं स्मारयति ।

समीकृतसुखासुखा मुनिवराः परब्रह्मणो
गुणानुभवमोदिताः प्रतिवसन्ति यस्मादिह ॥ ४ ॥

(सस्मितं) यदभिदधति प्राज्ञाः "कामिनीजिज्ञासा कार्य-सामान्यं प्रति प्रतिबन्धिके" ति, तत्तथ्यमेव । यत्पुरा कृतसान्निध्यस्य मे शकुन्तलाजिज्ञासा तावदीदृशदर्शना-नन्दविघटिका संवृत्ता, (नेपथ्ये) इदो इदो देवी,

विदूषकः — (1) (आकर्ण्य) का गई, पुणो वि अण्णा आअदा विअ, वअस्स गेह्न पाहेअं,

---

छाया — (1) का गतिः, पुनरप्यन्याऽऽगतेव । वयस्य, गृहाण पाथेयं,

---

॥ कामिनीजिज्ञासेति ॥ अत्र कामिन्याः जिज्ञासेति कर्तृकर्मो-भयसाधारण्येन जिज्ञासा विवक्षिता । तदनुगुणतयैव पश्चात् 'शकुन्तलाजिज्ञासे' ति विन्यस्तं । एवं च शकुन्तलाभावजिज्ञासा, शकुन्तलाकर्तृकदुष्यन्तभावजिज्ञासा, इति जिज्ञासाद्वयं दुष्यन्तस्यानन्य-मनस्कतां दृढीकरोति । तदित्थं । शकुन्तला प्रथमं, दुष्यन्तदर्शनप्रभृति सकामा तद्भावजिज्ञासया 'वाचं न मिश्रयति' 'अभिमुखे मयि संहृतं' 'दर्भाङ्कुरेण चरणः' इत्यादिक्रमेण स्वाभिप्रायमाविष्कुर्वन्ती, अन्ततः 'तुज्झ ण आणे हिअअं' इति दुष्यन्तभावजिज्ञासां व्यवृणोत् दुष्यन्तोऽपि 'सखीं ते ज्ञातुमिच्छामि' इत्यारभ्य पूर्वोक्तवचनानुगुणं 'भूयिष्ठमाविष्कृतो भावः' इति, 'धावति पश्चादसंस्तुतं चेतः' इति, 'मनस्तु तद्भावदर्शनायासि' इति च शकुन्तलाभावजिज्ञासां व्यवृणोत् । एवं च 'रतिमुभयप्रार्थना कुरुते' इति नयेन, जिज्ञासाद्वयं, अनन्यमन-स्कतां दृढीकरोतीति कवेराशयः । पुरा शकुन्तलाया रूपलावण्यवशीकृत-हृदयस्य दुष्यन्तस्यानुसरणेन विपिनेऽनुभूतां क्लेशपरम्परां संस्मृत्येदा-नीमपि तादृशसन्दर्भभीतेन माढव्येन ॥ कागई इत्युक्तं ॥

राजा — (सस्मितं) अलं शङ्कया, यद्यपि शब्दोऽयं पुरावृत्तं संविधानमेव स्मारयति, तथाप्यत्र वारयति देवीशब्द-स्तादृशीं शङ्कां,

विदूषकः — (1) को जाणादि कावि देवी णिअकण्णअं तुह देदुं आअदा हवे,

राजा — (विलोक्य) मूर्ख, शकुन्तलैषा सह सखीभ्यामित एवाभिवर्तते, तद्वृक्षान्तरितास्तावत्पश्यामः, कान्ताया विहारं (तथा करोति)

(ततः प्रविशति सह सखीभ्यां शकुन्तला)

शकुन्तला — (2) कहिं सो केसररुक्खओ,

---

छाया — (1) को जानाति,कापि देवी निजकन्यकां तुभ्यं दातुमागता भवेत्,
(2) कुत्र स केसरवृक्षकः,

---

॥ गेह्न पाहेअं, इति ॥ नित्यं प्रयाणाय सज्जो भवेति भावः । ॥ यद्यपीति ॥ शाकुन्तले (नेपथ्ये) 'इदो इदो सहीओ' इति शब्द-माकर्ण्य नेपथ्याभिमुखमवलोक्य, तपस्विकन्यका निपुणं निरूप्य 'अहो मधुरमासान्दर्शनं' इत्यादि पुरावृत्तं संविधानमेव स्मारयति । तथाप्यत्र देवीशब्दः तादृशीं शङ्कां वारयतीत्यस्य, पुरा खलु, अनूढां शकुन्तलां विलोक्य तद्रूपलावण्यवशीकृतहृदयः राजधानीगमनमपि विस्मृत्यात्रैव न्यवसं । इदानीं न तथा, यत इयं देवी, कृताभिषेका कस्यचिद्राज्ञो महिषी । अतस्तादृशशङ्काया नावकाश इत्याशयः ।

॥ कहिमिति ॥ शाकुन्तले, 'एष वातेरितपल्लवाङ्गुलीभिस्त्वर-यतीव मां केसरवृक्षकः । यावदेनं सम्भावयामि, इति केसरवृक्षके प्रीत्यतिशयं दर्शितवती शकुन्तला, इदानीं तथाविधप्रीत्यतिशयेनैव प्रथमं पृच्छति, कहिमिति ।

अनसूया — (1) णं पुळदो एव्व राअइ,

राजा — (विलोक्य)

सेयं विगलितमौग्ध्या सर्वालङ्कारभूषितावयवा ।
अन्येव भाति कान्ता स एव देशः पुरानुभूतोयः ॥ ५ ॥

शकुन्तला — (2) (सविस्मयं) जो तदा बाळो आसि, सो एव्व दाणिं प्पवुड्ढो सोहइ,

राजा — अहो, अनसूयाप्रियंवदे अपि गृहीणीपदमधिरूढे एव,

गाम्भीर्यं मुखपङ्कजे नयनयोश्चाञ्चल्यहीना गतिः
व्याहारे गतवक्रिमा च नितरां रीतिस्स्पृहावर्जिता ।

---

छाया — (1) ननु पुरत एव राजते,
(2) यस्तदा बाल आसीत्, स एवेदानीं प्रवृद्धश्शोभते,

---

॥ सेयमिति ॥ अत्र परिकररीत्या साभिप्रायं विगलितेति विशेषणद्वयं । अन्येवेयमिति, सम्भावना च । स एष देश इति चतुर्थपादार्थानुसारेण विलक्षणं कमपि भावं सूचयतः । सचेत्थं । अत्र दुष्यन्तः पुरानुभूतं तत्प्रदेशं, तदातनशकुन्तलायाः, उदयद्यौवनमुग्धावस्थां 'इयमधिकमनोज्ञा वल्कलेनापि तन्वी' इति 'अव्याजमनोहरं वपुः' इति चाभरणाद्यालङ्कारं विना स्वाभाविकसर्वावयवसौन्दर्यं च स्मृत्वा, सम्प्रति मध्यावस्थायां राज्ञीपदभाक्सर्वाभरणभूषिता सेयं, पुरावद्यथावस्थित एव प्रदेशो तादात्विकभावं विना 'अन्येव भाति' इति । अत्र व्यपगतमौग्ध्येति विहाय, विगलितेति स्रंसनपरतया मौग्ध्यविशेषणात्, चिरन्तनबन्धुजनानां तत्प्रदेशानां च दर्शनकुतूहलेन शकुन्तलायाः इदानीमपि स्पृहणीयमौग्ध्यावस्थाऽनुवृत्ता प्रकाशते, इति भावेन, अन्येवेत्युक्तं, नत्वन्यैवेति भेदकातिशयोक्तिः ।

॥ गाम्भीर्यमिति ॥ अत्र मौग्ध्यावस्थातो वैलक्षण्यं प्रकटितं, 'मुखपङ्कजे गाम्भीर्यं' इत्यनेन । मौग्ध्ये साभिप्रायमन्दहासादिसत्वात्

औदास्यं सकलेषु वस्तुषु किमप्याविष्करोत्येतयोः
गार्हस्थ्यं किल यौवतस्य परमा सीमा स्पृहापूरणे ॥ ६ ॥

शकुन्तला — (1) हळा पिअंवदे, मए वणजोसिणित्ति किद-
णामहेआ सहआरवहू णोमालिआ एत्थ ण दीसइ, सो खु

छाया — (1) हला प्रियंवदे, मया वनज्योत्स्नेति कृतनामधेया सहकारवधूर्नवमालिकाऽत्र न दृश्यते, सखल्वेष सहकारः, यः पूर्वं जलसेचनेनापत्यनिर्विशेषं वर्धितः मया कृतनवमालिकाविवाहश्च,

गूढंमुकुलितमिव स्थितं मुखपङ्कजं सम्प्रति तदभावात्समन्दहासं विकसितमिव गम्भीरं प्रतिभातीति भावः सूचितः। नयनयोश्चाञ्चल्यहीना गतिरित्यनेन, मौग्ध्ये स्वाशयाविष्करणायापाङ्गवीक्षणादिना चञ्चले नयने सम्प्रत्यावश्यके क्वापि व्यापृततया, नलिनायताक्षीति व्यवहारानुगुणं विस्तृते विलसत इति भावस्सूचितः। व्यहार इत्यादि। पूर्वं स्वाशयाविष्करणाय, तत्तद्वस्तुस्पृहानुगुणं वक्रोक्तिस्समजनि, सम्प्रति सर्वतोनिस्पृहतया निष्कपटैव ऋजुरूपिणी वागिति भावः। ॥ औदास्यमित्यादि ॥ पूर्वं सर्ववस्तुषु भोग्यताबुध्या जिगृक्षुतयाऽऽदरातिशय उदभूत्, सम्प्रति तत्तद्वस्तूनां चिरपरिचयाद्वैराग्येणोदासीनता प्रभवति। ॥ गार्हस्थ्यमित्यादि ॥ युवतिजनस्य गृहस्थाश्रम एव सर्वानन्दपराकाष्ठेति भावः।

शाकुन्तले, हळा शकुन्तले, इयं स्वयंवरवधूस्सहकारस्य, त्वया कृतनामधेया वनज्योत्स्नेति नवमालिका। एनां, विस्मृतवत्यसीति, अनसूयोक्तं श्रुत्वा, तदात्मानमपि विस्मरिष्यामीति, शकुन्तलया नवमालिकायां प्रीत्यतिशयः प्रकटीकृतः। इदानीं तादृशप्रेमातिशयपात्रीभूतां तां नवमालिकां तत्रानवलोक्य समुद्विग्ना शकुन्तला पृच्छति ॥ हळेत्यादिना ॥

एसो सहआरो, जो पुव्वं जळसेअणेण अवच्चणिव्विसेसं वड्डिदो मए किदणोमाळिआविवाहो अ,

प्रियंवदा — (1) सो एव्व एसो, महन्तो संउत्तो, सा णोमाळिआ उण बहुवाळं पुप्फिदा जळाजिण्णा धळणिदळम्मि णिवडिदा, एसो सहआरो उण अण्णाए ळदाए संगदो वट्टइ,

शकुन्तला — (2) (सचाप्पं) एव्वं एव्व हि ळोए पुरिसाणं ससहावो,

विदूषकः — (3) (गजानं चालयित्वा) कहं भणिदं देवीए,

राजा — सत्यमाह प्रिया, इदानीमेष सहकारः,

भ्रमरझङ्कृतिमञ्जुसुमावलिः
तरुणपल्लवरागमनोहरः ।

---

छाया — (1) स एवैष महान्संवृत्तः, सा नवमालिका पुनः बहुवारं पुष्पिता जराजीर्णा धरणितले निपतिता, एष सहकारः पुनः, अन्यया लतया सङ्गतो वर्तते,

(2) एवमेव हि लोके पुरुषाणां स्वभावः,

(3) कथं भणितं देव्या,

---

॥ सो एव्व इत्यादिना ॥ लोके पुरुषापेक्षया स्त्रीणां यथा शीघ्रं तारुण्याविर्भावः, तथा वार्धक्यप्रादुर्भावोपीति, सूच्यते ।

॥एव्वं एव्वेति॥ पुरुषाणां स्वभाव एवेदृशः । यावद्यौवनं स्त्रीणां, तावदेव तत्र प्रेमानुबंधः । यौवनापगमे तु अन्यत्रासक्तिरिति भावः । इयमुक्तिर्भवन्तं स्पृशतीत्याशयेनाह ॥ कहं भणिदं देवीए इति ॥

॥ भ्रमरेति ॥ अत्र नवलतासंसृष्टसहकारवर्णने, प्राथमिकेन विशेषणद्वयेन, पुष्पादिविरक्तानां शिथिलावयवानामप्यशिथिलकामवतां पुरुषाणां सम्पादिततरुणीमनस्समावर्जनानुगुणं स्वात्मनः पुष्पाङ्गरागाद्य-

नवलतापरिरम्भणगर्वितः
स्मरति नैव लतां नवमालिकाम्  ॥ ७ ॥

शकुन्तला — (1) (परिक्रम्य) किं एदं, सत्तवण्णवेदिआए अस्सत्थो आरोविदो,

अनसूया —(2) तादकस्सवस्स णिओएण एसो रुक्खो ठाविदो,

राजा — साधु कृतं काश्यपेन,

यस्मादश्वत्थवृक्षोऽयं प्रतीक्ष्यो दुरितापहः ।
प्रदक्षिणादिकार्याय तेन संरोपितस्ततः  ॥ ८ ॥

---

छाया — (1) किमेतत्, सप्तपर्णवेदिकायामश्वत्थ आरोपितः,
(2) तातकाश्यपस्य नियोगेनैष वृक्षस्स्थापितः,

---

लङ्कारेण युवपुरुषविडम्बना लोकसिद्धेति व्यज्यते । नवलतेत्यादिना-नवनवागतं स्पृहणीयं वस्तु परमोपकारिणामपि प्राक्तनं सर्वं विस्मारयतीति, अयं स्वभावः कामस्यैवासाधारण इति सूच्यते ।

॥ किं एदं इति ॥ शाकुन्तले, तेन ह्यस्यां प्रच्छायशीतलायां सप्तपर्णवेदिकायां मुहूर्तमुपविश्य परिश्रमविनोदं करोत्वार्यः, इति प्रियंवदयोक्तं । एतेन, अभिमतातिथिपरिश्रमापनोदनपटुतया तत्कालिकमौग्ध्यानुगुणस्पृहानुकूलतया च शकुन्तलायाः तदाभिमततमस्सप्तपर्णवृक्षक आसीत्, इति द्योत्यते । इदानीं तथाभिमततमसप्तपर्णवृक्षकानवलोकननिबन्धनोऽयं प्रश्नः ।

॥साध्विति ॥ अत्र साधु कृतं काश्यपेनेत्यनेन, पूर्वं शकुन्तलां कामयमानस्य दुष्यन्तस्य सप्तपर्ण एव हृदयङ्गम आसीत् । इदानीन्तु शिथिलकामतयाऽश्वत्थ एव योग्यतया भासते, इति सूच्यते ।

॥ यस्मादिति ॥ अश्वत्थवृक्षोऽयं 'अश्वत्थस्सर्ववृक्षाणां' इति भगवदंशत्वात्, अनिष्टनिवृत्तेष्टप्रापकस्सर्वरक्षको भगवान्प्रत्यहं प्रदक्षिण-

शकुन्तला — (1) (अन्यतो विलोक्य) अह्मो, रमणिज्जो खु एसो मअसद्धो,

प्रियंवदा — (2) जा तुह प्पत्थाणकालम्मि गुव्विणी आसी, ताए संददी एसो मअसद्धो,

शकुन्तला — (3) (सानन्दं) वड्ढदु णाम, कहिं सा,

अनसूया — (4) (अङ्गुल्या निर्दिश्य) पेक्ख, दूळे रुक्खच्छाआए सुवइ,

शकुन्तला — (5) (विलोक्य) कहं वुड्ढा संउत्ता,

प्रियंवदा — (6) हळा सउंदळे, पेक्ख को एसो, (तरुच्छाये शयानं हरिणं प्रदर्श्य) अवि णाम सुमरसि,

---

छाया — (1) अहो, रमणीयः खल्वेष मृगसार्थः,

(2) या तव प्रस्थानकाले गुर्विण्यासीत्, तस्याः सन्ततिरेष मृगसार्थः

(3) वर्धतां नाम, कुत्र सा,

(4) पश्य, दूरे वृक्षच्छायायां स्वपिति,

(5) कथं, वृद्धा संवृत्ता,

(6) हला शकुन्तले, पश्य क एषः, अपि नाम स्मरसि,

---

प्रणामादिना पूजनीय इति, शकुन्तलासौमङ्गल्यापादनाय काश्यपस्स्थापितवानिति भावः। यद्वा, शकुन्तलया निजवयोनुगुणं स्पृहया वर्धितस्य सप्तपर्णस्य प्रतिदिनं दर्शनेन तद्विरहजं दुःखं नवं नवं भवतीति विचिन्त्य काश्यपः, सर्वप्रत्तीक्ष्यं वृक्षमेनं स्थापितवानिति भावः।

॥ जा तुहेति ॥ 'तात, एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदाऽनघप्रसवा भवति, तदा मह्यं कमपि प्रियनिवेदयितृकं विसर्जयिष्यथ' इति प्रस्थानावसरे त्वयोक्तं खलु। तस्यास्सन्ततिरेष मृगसार्थ इत्याशयः।

शकुन्तला — (1) ण सुमरामि, को एसो,

प्रियंवदा — (2) दीहापङ्गो,

शकुन्तला — (3) (सवैलक्ष्यं) कहं, दीहापङ्गो, (उपसृत्य तन्मुखं चुम्बति)

राजा — अहो. शरीरस्वभावः,

मसृणसूक्ष्मतनूरुहमञ्जुलः
तरलवीक्षणवल्गनकर्मभिः ।
हृदि मुदं व्यतनोन्मम यः पुरा
स परिणामवशादधुनेदृशः ॥ ९ ॥

ससम्भ्रमं प्रविश्य बालकः — (4) अंब महहरिणपोदओ

---

छाया — (1) न स्मरामि, क एषः,
(2) दीर्घापाङ्गः,
(3) कथं दीर्घापाङ्गः,
(4) अम्ब, मम हरिणपोतको यत्र कुत्रापि धावन्गतः, तं गृहीत्वा देहि मह्यं,

---

शाकुन्तले, राज्ञा प्रत्यादिष्टया शकुन्तलया राजविस्रम्भार्थं दीर्घापाङ्गाख्यस्य मृगपोतकस्योदन्तः कथितः खलु । स एव दीर्घापाङ्गः प्रियंवदया दर्शितः ॥ कहमिति ॥ कथमित्याश्चर्ये, आश्चर्यनिदानन्तु, अत्यन्तबाल्यावस्थापन्नस्स मृगः प्रवृद्धस्तारुण्येनैवं शोभते, इति ।

॥ अहो इति ॥ निर्वर्णितोऽपि, सोयमित्याकारकप्रत्यभिज्ञैव न जायते, अहो, आश्चर्यमिति भावः ।

॥ मसृणेति ॥ अनेन वृत्तान्तेन, सकलमेव वस्तु देशकालभेदेन परिणामवशाद्रूपान्तरं भवतीति भावः, सूचितः । तेन तदनुभोक्तृणामपि, आनन्दवैलक्षण्यं भवतीति भावस्सूचितः ।

जहिं कहिं वि धावंतो गदो, तं गेह्णिअ देहि मह,
(इत्यनसूयाया वल्कलाञ्चलं गृह्णाति)

राजा — अहो, पुत्रवत्यपीयमनसूया,

विदूषकः — (1) प्पिअंवदावि गुब्भिणी,

राजा — अथकिं,

मन्दं चलत्यलसदृष्टिरियं कपोल —
लावण्यपूरविकलीकृतमौक्तिकाभा ।
आरण्यकानुगुणभूषणभूषितापि
गर्भात्तगौरतनुकान्तिमनोहरैव ॥ १० ॥

---

छाया — (1) प्रियंवदापि गुर्विणी,

---

॥ मन्दमिति ॥ युवतीनां मन्दगमनस्य स्वाभाविकत्वेऽपि, प्रकृते, 'अलसदृष्टिश्चलति' इति पदसमभिव्याहारमहिम्ना गर्भभरालसतया क्वापि स्पृहणीयं द्रष्टुं, गन्तुं वा अक्षमापि, मन्दं चलतीत्युक्तं । न तु यातीति । एवं चापन्नसत्वानां स्वाभाविकोऽयं विलक्षणगमनदर्शनशोभातिशय इति भावः । ॥ कपोलेति ॥ अत्र सौन्दर्येत्यनुपन्यस्य, लावण्ये तिकथनात्, मुक्ताफलच्छायासदृशतरलशोभातिशयस्यैव लावण्यपदेन व्यवहारात्, प्रकृते प्रतीपालङ्कारदिशा कपोललावण्येन मुक्ताफललावण्यमपि तिरस्कृतमिति भावः । यद्वा, आरण्यकमौक्तिककर्णाभरणस्य सद्भावविवक्षया 'अलङ्कारः कपोलस्य तु कुण्डलं' इति न्यायेना लोके कपोलालङ्कारतया प्रसिद्धं मौक्तिककुण्डलं प्रकृते गर्भकालिककपोलशोभया निस्तेजस्कं भातीति भावः । ॥ आरण्यकेति ॥ अत्र वन्यकुसुमाद्यलङ्कारसत्वेऽपि गर्भकालीनस्वाभाविकशरीरसौन्दर्यमेव मनोहरमिति भूषितापि इत्यपिना सूचितं । एतेन स्त्रीणां प्रथमगर्भे एवाभरणाद्यनपेक्षः विलक्षणगतिमान्द्यसौन्दर्यादिना मनोहर इति सूच्यते ।

अनसूया — (1) (बालकमादाय) सो गच्छदु णाम, अण्णं वण्ण-
हळिणपोदअं देमि,

बालकः — (2) (सशिरश्चालनं) मा मह वण्णहळिणपोदओ, तं
एव्व देहि, (गेदिति)

चित्रपटहस्तो भरतः प्रविश्य — (3) णं चित्तफळअं देमि,
एत्थ आअच्छ,

विदूषकः — (4) अह्महे, चित्तफळओ इमस्स हत्थं कहं गदो,

राजा — (सविचिकित्सं) कथं, स चित्रफलकः, केनानीतः,

विदूषकः — (5) अण्णेण केण,

राजा — किन्नु खल्विदं, एवं कृतं, मूर्ख, अनवसरज्ञोऽसि,

विदूषकः — (6) को दोसो, सुट्ठु मए किदं,

राजा — इदमवलोक्य परिहसन्ति,

---

छाया — (1) स गच्छतु नाम, अन्यं वर्णहरिणपोतकं ददामि,
(2) मा मह्यं वर्णहरिणपोतकः, तमेव देहि,
(3) एनं चित्रफलकं ददामि, अत्रागच्छ,
(4) अहो, चित्रफलकोऽस्य हस्तं कथं गतः,
(5) अन्येन केन,
(6) को दोषः, सुष्ठु मया कृतं,

---

॥ इदमिति ॥ राजा स्त्रीलोल इति परिहसन्तीत्याशयः ।

॥ तह णह्नीति ॥ दुर्वाससश्शापमहिम्ना अज्ञानाद्राज्ञा प्रत्यादिष्टा शकुन्तला, न तु ज्ञात्वापि स्वबुद्ध्या । अत एवाभिज्ञानदर्शनानन्तरं स्मृतिपथमारूढां शकुन्तलां चित्रगतां कृत्वाऽऽत्मानं विनोदितवान्राजर्षि-र्दुष्यन्तो दोषगन्धरहित इति मन्यन्ते इति भावः ।

विदूषकः — (1) तह णहि णिद्दोसो राआत्ति मण्णंति,

(वृक्षान्तरान्मृगार्भकस्सवल्गितमनसूयामुपधावति)

अनसूया — (2) पेक्ख, सो एव्व आअदो, गेह्ण तं एव्व,

(बालकमवतारयति)

भरतः — (3) हं गेह्णामि, (इति चित्रफलकं निपात्य सहसोपसर्पति) (हरिणार्भकः पुनरप्यपसरति) (विदूषकः – सहसोपसृत्य चित्रफलकमादत्ते)

राजा — (उपसर्पन्तं हरिणपोतकमादाय) हन्त,

मृदुलमुग्धतनुर्हरिणार्भकः
सभयकण्ठरवः कृतवल्गनः ।
करगतोऽयमितश्च्यवनाकुलः
स्फुरति विस्तृतलोलविलोचनः ॥ ११ ॥

---

छाया — (1) तथा नहि. निर्दोषो राजेति मन्यन्ते

(2) पश्य, स एवागतः गृहाण तमेव,

(3) अहं गृह्णामि,

---

॥ मृदुलेति ॥ लोके मृगस्य मनुष्यस्य वा शिशुतायां स्पृहणीयतया करतललालनाय जिघृक्षा सर्वेषामेवोपजायते । तथात्र हरिणशिशोर्ग्रहणसमनन्तरं तदीयचेष्टां विलोक्य हन्तेति लोकविलक्षणोऽयं शिशुस्वभाव इति, आश्चर्यकारणं विवृणोति । लोके सुकुमारतनुस्सुन्दरशिशुस्सदा करतललालितस्सन्करतलवासापेक्षः कदाचिद्भूमौ च्यवनेन, विन्यासेन, व्याकुलः, सभयकण्ठध्वनिः कृताङ्गपरिवर्तनः, चञ्चलाक्षस्स्फुरेत् । अयन्तु मृगशिशुः, भूमौ वर्तमानः, निर्भयसञ्चारी मत्करतलगत एव, तथैव च्यवनाकुलतया हेतुना भूमौ विसर्जनापेक्षो लोक-

(मन्द मुपसर्पति)

बालकः — (1) अंब, केण वि सो ग्गहीदो, (अङ्गुल्यादर्शयति)

(अनसूयाप्रियंवदे — विलोक्य सलज्जं स्तोकमपसरतः)

राजा — (उपसृत्य) वत्स, मा रोदीः, गृहाणैनं, (ददाति)

बालकः — (2) (सहासं) अंब, णेण दिण्णो, (प्रदर्श्य) को एसो,

अनसूया — (3) (मन्दं) महाराओ,

बालकः — (4) कहं, अह्माणं अस्समं आअदो, (इतिराजानमेव पश्यति)

राजा — अहो निर्व्याजप्रेमातिशयो बालस्य,

---

छाया — (1) अम्ब, केनापि स गृहीतः,

(2) अम्ब, अनेन दत्तः, क एषः,

(3) महाराजः,

(4) कथं, महाराजोऽस्माकमाश्रममागतः,

---

विलक्षणः पूर्वोक्तप्रकारेण सभयाद्याकारो दृश्यते। च्यवनायाकुल इति चतुर्थी। सर्वस्सन्गाधेषु विश्वसितीति, न्यायेन प्रत्यहं संरक्षणादिना आरण्यकजनकरतललालितोऽयं शिशुर्निश्चिष्ठो वर्तते मृगयापरे तु मयि जीवितापेक्षः करतलाच्च्यवनापेक्षी परिस्फुरतीति निर्वेदपरतयापि हन्ते-त्युक्तिस्सङ्गच्छते। अथवा, हन्तति हर्षे। मृदुलेत्यादिना मृगशि-शोस्स्वभावो वर्णितः, तादृशमृगशिशुस्वभावावलोकनेन हर्षः।

महाराजकर्णपथाप्रवेशाय मन्दमित्युक्तं लज्जाकार्यमिदं।

॥ कहमित्याश्चर्ये ॥ अह्माणं अस्समं आअदो सुखैकतानो महा-राजः क्लेशप्रायमस्माकमाश्रमपदमागतः, आश्चर्यमिदमिति भावः। अथवा दुर्लभं राजदर्शनमिदानीमत्रैवास्माकं सुलभमासीदित्याश्चर्यं।

सादरं वीक्षमाणो मां निश्चलायतलोचनः ।
मृगे क्रीडास्पदे सक्तौ भुजौ शिथिलयत्यसौ ॥ १२ ॥

(नेपथ्ये) वेदघोषः

राजा — किन्नु खलु, तपोधनानामागमनमिव,

विदूषकः — (1) जइ एव्वं महाबह्मणो सज्जो होमि, ताणं दंसण दाणस्स (इति सम्यक्कृतपरिधान स्सगम्भीरं तिष्टति)

( राजा— सविनय परिक्रामति )

( ततः प्रविशतः करगृहीतपूर्णकुम्भौ शार्ङ्गरवशारद्वतौ उदीर्यमाणमन्त्रै स्तापसै स्समं )

राजा — स्वागतं तपोधनानां ( प्रणमति )

सर्वे ( बाहुमुद्यम्य ) मङ्गलं भूयात्

( राजा— पूर्णकुम्भौ पाणिभ्यां स्पृष्ट्वा साञ्जलिबन्धं तिष्ठति )

शार्ङ्गरवः— राजन्, इयमस्माकं भगिनी "निस्तीर्णविप्रयोगार्णवां वत्सां वल्लभेन साकं द्रष्टुमिच्छामि" इति कुल-

---

छाया — (1) यद्येवं, महाब्राह्मणस्सज्जो भवामि तेषां दर्शनदानाय,

---

॥ सादरमिति ॥ अत्र निर्व्याजप्रेमातिशयं विवृणोति । बाल्यान्मृगशिशावेव लीलार्थं सादरग्रहणदर्शनपरोऽयं बालः, महाराजशब्दश्रवणमात्रेण 'राजा प्रकृतिरञ्जनात्' इति राजशब्दार्थस्मरणपूर्वकं मदीयसंरक्षणवैभवं किमप्यजानन्नपि साकूतं मदेकदर्शनसक्तचितः, मृगलीलामपि विस्मरन्, स्तब्धगात्रचित्तो वर्तते, कोयमारण्यकस्वभाव इत्याश्चर्यपरवशः, अहो, इति वर्णयति । किञ्च, बालस्याप्याकर्षकं निजतेजोविशेषमनुचिन्त्य, अहो, इत्युक्त ॥ जइ एव्वमिति ॥ अत्रापि हास्योक्तिः ।

पतिना समादिष्टा भवदागमनं प्रतीक्षमाणा पूर्वपरिचित-प्रदेशावलोकनेन तावदात्मानं विनोदयन्ती वर्तते,

राजा — कथं, मां प्रतीक्षते देवी, सज्जोऽहमात्मानं कृतार्थयितुं,

विदूषकः — (1) (आत्मगतं) किण्णु खु एक्को वि मं ण गणेइ (सनिर्वेदं भरतमादाय जनान्तिकं) पेक्ख कहं वट्टंति लंवकुच्चा एदे,

भरतः— (2) मा भणादु अज्जो एव्वं,

राजा — अपि निर्वर्तितहवनकर्मा कुलपतिः

शाङ्र्गरवः — अवसितप्रायं, अग्निशरण एव भवन्तं द्रष्टु-मिच्छति,

राजा — महाननुग्रहः (शकुन्तलाया मुखं पश्यति)

शकुन्तला — (3) (समन्दस्मितं) किं हं एव्व अग्गदो गमिस्सं,

राजा — (सस्मितं) महान्प्रमोदः ( शकुन्तलां पुरस्कृत्य सर्वैस्सह परिक्रम्य नेपथ्याभिमुखमवलोक्य )

---

छाया — (1) किन्नु खलु, एकोऽपि मां न गणयति, पश्य कथं वर्तन्ते लम्बकूर्चा एते,

(2) मा भणत्वार्य एवं,

(3) किमहमेवाग्रतो गमिष्यामि,

---

॥ पेक्ख कहं वट्टंतीति ॥ अत्रापि हास्योक्तिः ।

पुरुषकारमन्तरा कण्वस्य स्वमुखदर्शनं लज्जावहमिति मनसि निधाय शकुन्तलायामुखं पश्यति । इङ्गितज्ञा शकुन्तला पृच्छति ॥ किं हं एव्वेत्यादि ॥

रवितेजोऽभिभूताय हविषा जातवेदसे ।
ददान इव तेज स्स्वं भाति वेद्यां तपोधनः ॥ १३ ॥

(स्तोकमन्तरं गत्वा) धन्यः खल्वहं,

तेजःपुञ्जो मूर्तिमान्स्वाश्रितानां
मोहध्वान्तध्वंसनायावतीर्णः ।
साक्षाच्छ्रीमान्कर्मसाक्षीव कण्वः
शान्तात्मा मां दूरतो वीक्षते यत्, ॥ १४ ॥

( ततः प्रविशति यथा निर्दिष्टः कण्वः )

कण्वः— (दूरादेव विलोक्य) राजायं धर्मवृत्या तावदस्मानप्यतिक्रामति,

भोगास्पदे स्थितो राज्ये चातुर्वर्ण्यावने रतः ।
नित्यं स्वसुखनिस्तर्षः साक्षाद्राजर्षिरेव हि ॥ १५ ॥

---

॥ रवितेज इति ॥ अत्र वह्नेस्सूर्यतेजसाऽभिभूतत्वकथनेन स्वतस्तेजिष्ठानामपि निकृष्टेषु किञ्चित्तेजसाप्यसूयया तन्नाशप्रयत्नो भवतीति सूचितं । महतां स्वभावस्तु, 'ददान इव तेजस्वं' इति रीत्या स्वकीयसर्वस्वदानेनापि निकृष्टानामप्युत्कृष्टोत्कर्षापादने प्रभवतीति भावः । अनेन पद्येन नैसर्गिकतेजोऽपेक्षया तपोमहिमार्जितस्य तेजसः परमोत्कृष्टत्वं सूचितं । अत एव, ददान इव तेजस्स्वमिति, स्वतस्तेजिष्ठायापि तेजःप्रदानमुपपन्नं ।

॥ तेज इति ॥ अनेन धन्यतां विवृणोति । लोके सूर्योऽसह्यदर्शनो निजतेजोमहिम्ना बाह्यान्धकारमेव व्यपोहति । अयं तु ब्रह्मतेजोमूर्तिमहर्षिस्सुखदर्शनश्शान्तरूपी, आश्रितानां बाह्यविषयमान्तरविषयञ्चाज्ञानान्धकारमितरैरनिवर्त्यं कटाक्षमात्रेण निराकरोतीति पश्चाद्वक्ष्यमाणस्वानुभवानुरोधेन विवृणोति ।

राजा — (स्वगतं)

ईदृशं तपसां राशिं शान्त्यादिगुणसागरम् ।
अदृष्ट्वैव मुनिं पूर्वं दस्युवन्नगरं गतः ॥ १६ ॥

तदिदानीं —

मुनेः परोक्षे दुहितुर्विवाहं
कृतन्तु संस्मृत्य मनो मदीयम् ।

---

॥ भोगास्पद इति ॥ अत्र काश्यपो राजानं दृष्ट्वा केवल-मात्मार्थज्ञानपरतया ऋषिशब्दवाच्यास्मदपेक्षया सुखास्पदे राज्ये स्वात्मनस्सुखानुभवमप्यनभिलष्य चातुर्वर्ण्यसंरक्षणैकचित्तस्तपःफलं राज्य-फलञ्चानुभवन्सोऽयं राजर्षिरस्मानतिशेत इति 'परोपकारार्थमिदं शरीरं' इति तदीयधर्मवृत्तिं श्लाघते ।

॥ ईदृशमिति ॥ ईदृशमिति साभिप्रायं । तपोराशीनान्तु महर्षीणां गूढमपि तेजः, सापराधविषये, शमप्रधानेष्विति न्यायेन शापादिदानाय स्वशान्तिगुणमपि परिभूय बहिस्समुज्जृम्भते । अयन्तु तपोराशिरपि शान्त्यादिगुणसागर इति, बडबानलं स्वात्मनि निगूह्य सर्वोपसेव्यतया वर्तमानो जलनिधिरिव शान्तिप्रवाहेण कोपस्यावकाशं कथमप्यदत्वाऽनुग्रहैकपरो वर्तते । इति, ईदृशमिति पदेनेतरमहर्षिभ्यो वैलक्षण्यं सूच्यते, एतादृशानां सन्निहितानां महात्मनां सेवासुखानादरेण गमनं चोरवृत्तिरेव । चोरास्तु, अपहृतवस्त्वधिकारिदर्शने दण्डनभिया स्वपराधशङ्किता निलीना भवेयुः । तथा रहसि शकुन्तलापहारी साप-राधोहं चोर एव । सापराधेऽप्यनुग्रहैकशीलमेनं महर्षिमविगणय्य सेवासुखपरित्यागेन निर्भयवासवाञ्छया नगरमगमं । अत्र 'अदृष्ट्वैव मुनिं पूर्वं' इति पदार्थपर्यालोचनया महर्षेर्वने नगरे लोकान्तरे वा किमप्यविज्ञातं नास्तीत्यपर्यालोच्यैव निर्भयभावनया नगरं गत इति किमिदमज्ञानकार्यमिति भावः ।

॥ मुनेः परोक्ष इति ॥ मुनेरिति पदं साभिप्रायं, त्रिकालज्ञानिनां

त्रासत्रपासङ्कुचितं रुणद्धि
मा मेति धैर्यादुपसर्तुमेनम् ॥ १७ ॥

अथवाऽनतिक्रान्तधर्मवृत्तेर्मम का नाम विचिकित्सा शान्तात्मनि तपोधने (उपसृत्य प्रणमति)

कण्वः — (प्रकाशं) राजन्,

अवाप्तसर्वकामस्य स्वधर्मनिरतस्य ते ।
आशीर्वचस्तु यात्यद्य सिद्धसाधनतां ध्रुवम् ॥ १८ ॥

---

महर्षीणां सर्वं प्रत्यक्षमेवेत्यविगणय्य परोक्षभावनया मौढ्यान्मया तदा कृतं शकुन्तलाविवाहं संस्मृत्य भीतंभीतं मदीयं मनस्तावदधीरं सन्मुनेरुपकण्ठं पदात्पदं चलितुमपि मा मेति निरुणद्धि । अनेन बहिरितरानवलोकितं कृतमपि कार्यं मनस्साक्षिकमनुतापमेव क्वाप्यप्रवर्तकं जनयेदिति भावः ।

॥ अथवेति ॥ अनतिक्रान्तेति, शान्तात्मनि तपोधने, इति च कथनात् यद्यहं बुद्धिपूर्वमतिक्रान्तधर्मस्स्यां, तदायं क्रुद्धो भवेत् । यतश्शान्तात्मा, तत एव शकुन्तलायाः स्वयमेव परिगृहीतगान्धर्वविवाहं, दुर्वाससश्शापस्वरूपं च परिचिन्त्य महर्षिरयं निरपराधे मयि शान्तरूपो वर्तते, इति भावेन 'का नाम विचिकित्सा' इत्यादिना, दुष्यन्तस्समाहितमना बभूवेति भावः ।

॥ अवाप्तेति ॥ शाकुन्तले, मारीचाशीर्वादतुल्योऽयं । अवाप्तेति, स्वधर्मेति च कथनात्, 'नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि' इति गीताचार्यवचनानुरोधेन फलं विनापि लोकसङ्ग्रहार्थं स्वधर्मानुष्ठानमावश्यकमिति सूच्यते । अत्राशिषस्सिद्धसाधनत्वं नाम 'तव प्रसादस्य पुरस्तु सम्पदः' इति न्यायेन, भाव्यनुग्रहमहिम्ना पूर्वजातस्य वैभवस्य साधनताकारेण जायमानः पश्चात्तनानुग्रह एव । लोके तु साध्यसाधनमाशीर्वचनं इति महर्षेराशीर्वचनस्य वैलक्षण्यं द्योत्यते । अवाप्तसर्व-

राजा — (प्रकाशं) अनुग्राह्योऽयं,

कण्वः — एवमेव भूयाः,

शकुन्तला — (1) (समन्दाक्षं) सउंदळा हं वंदामि, (भरतेन सह प्रणमति)

कण्वः — जाते, अनवरतमपि भर्तुरभिमता पुत्रानुवर्त्यमाना च भव, (अवशिष्टं हवनकर्म निर्वर्त्य सर्वैस्साकमग्निं प्रदक्षिणीकृत्य)

मन्त्राहुतिविवृद्धात्मा ज्वालामालासमुज्वलः ।
पुनातु पावको युष्मान्सर्वकिल्बिषघस्मरः ॥ १९ ॥

(सर्वैस्साकमग्निशरणान्निष्क्रम्य निजोटजं प्रविश्योपविश्य च) राजन्, इदमासनं,

राजा — अस्तु नाम, (क्षितितल एव शकुन्तलयोपविशति)

कण्वः — राजन्,

अपि नाम तपो विवर्धते ते
प्रकृतीनां परिपालनात्मकं तत् ।

---

छाया — (1) शकुन्तलाऽहं वन्दे,

---

कामत्वादेव 'एवमेव भूयाः' इत्याशीर्वादः । इदानीं विद्यमानस्य तव वैभवस्य कदापि न्यूनता माभूदित्याशयः ।

॥ मन्त्रहुतीति ॥ इदं पद्यं शाकुन्तले 'अमी वेदिं परितः' इति पद्यार्थं स्मारयति ।

भवतामग्रे तावदासनपरिग्रहोऽनुपपन्न इत्याशयेनोक्तम् ॥ अस्तुनामेति॥

॥ अपि नामेति ॥ 'राजा कालस्य कारणं' इति न्यायेन, काल-प्रवर्तकत्वस्य राज्ञि विद्यमानत्वात्, धर्मवृत्त्या चातुर्वर्ण्यावनमेव दुष्करं तपः । तादृक्तपः, अपि नाम विवर्धते । 'राजा प्रकृतिरञ्जनात्' इति रीत्या, स्वत्परिपालनसामर्थ्यावलोकनेन सन्तुष्टाः प्रजाः, त्वयि, अनुरक्ता

त्वयि सन्ति किमु प्रजाश्च रक्ताः
निजधर्मैकरता निरन्तरायाः ॥ २० ॥

राजा — (सविनयं) भगवन्, के वयमत्र,

तपसां महिमा भवादृशाना
मनुशास्ति स्वयमेव धर्मवृत्तिम् ।
वयमत्र तु राजशब्दभाजः
प्रकृतीनां परिपालने निमित्तम् ॥ २१ ॥

शार्ङ्गरवः – राजन्, निष्प्रत्यूहमस्माकं कर्मैव कथयति ते प्राभवं,

---

वर्तन्ते किमु। स्वस्ववर्णाश्रमानुगुणतया प्रजाः, निरन्तराया वर्तन्ते किमु। 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इति न्यायेन, स्वस्ववर्णाश्रमधर्मपरित्यागे भयोत्पत्त्या प्रजानां सुखजीवनं प्रणष्टं भवेत्, । तादृशभयस्य प्रजासु नावकाशः किमितिभावः ।

॥ के वयमत्रेपि ॥ अस्मत्सामर्थ्यात्प्रजापरिपालनं धर्मवृत्त्या नैव प्रचलति। किन्तु, भवादृशानां महात्मनां तपोमहिम्नैव सर्वं प्रचलतीत्याशयः ।

एतदेवोपपादयति ॥ तपसामिति ॥ अस्मादृशानां पालनसामर्थ्यान्नैव तिष्ठति जगति धर्मवृत्तिः। किन्तु भवादृशानां महात्मनां तपोबलेन । वयन्तु क्षत्रियत्वाद्राजशब्दभाजः, निमित्तमात्रं रक्षणकार्ये नियुक्ताः । भवादृशानां तपोबलाभावे वयमसत्कल्पा एव । 'दैवाधीनं जगत्सर्वं मन्त्राधीनं तु दैवतं, तन्मन्त्रं ब्राह्मणाधीनं ब्राह्मणो मम देवता' इत्युक्तरीत्या जगतः स्थितिगत्याधिकं सर्वमपि ब्राह्मणतपोबलेनैव प्रचलतीति भावः ।

दुष्यन्तस्य नैच्योक्तिमाकर्ण्याह ॥ राजन्निति ॥ भवद्रक्षणसामर्थ्यादेवास्माकं निष्प्रत्यूहं प्रचलति । भवादृशस्य राजर्षेरक्षणाभावे कथंवा वयमेवं निरन्तरायं ब्राह्मणकर्म कुर्यामेति भावः ।

(ततः प्रविशति मेनका)

मेनका — (1) दिट्ठिआ पेक्खामि,

राजा — किन्नु खलु,

बालातपाहतकनत्कनकप्रभाभिः
वेश्मैतदाशु परिलिप्तमिवावभाति ।
सौदामनी किमु न सा सुचिरद्युतिस्स्यात्
कान्तिच्छटाजठरभागिव विस्मितोऽस्मि ॥ २२ ॥

(मेनका — उपसृत्य सबाष्पगद्गदं तिष्ठति)

राजा—(विलोक्य सवैलक्ष्यं) किन्नु खलु, शकुन्तलाद्वयमिवैकदा,

शकुन्तला — (2) (ससम्भ्रममुत्थाय) अंब, (इत्यालिङ्गति)

---

छाया — (1) दिष्ट्या पश्यामि,
(2) अम्ब,

---

॥ बालातपेति ॥ तप्तजाम्बूनदसदृशशरीरकान्त्याः मेनकायाः दूरादागमनेन पर्णशालायां प्रसृमरं कान्त्यतिशयमवलोक्य सविस्मयं सौदामनीति भ्रान्तः, तदनन्तरं, नेयं सौदामनी, यतस्सुचिरद्युतिरिति निश्चित्याहं पुनः कान्तिप्रवाहान्तःपरिप्लुतोऽस्मीति नितरां विकक्षो बभूवेत्याशयः । चिरवियुक्तयोरेतयोर्दम्पत्योरेकत्र सन्दर्शनजन्यानन्दातिशयेन बाष्पगद्गदादिकं । मेनकाशकुन्तलयोरैकरूप्यमवलोक्य विकक्षो दुष्यन्तः प्राह ।

॥ किन्नु खल्वित्यादि ॥ सत्यं शकुन्तलाया जननीति । मेनकामन्तरा का वान्या, स्त्रीरत्नमेतादृशं प्रसूते । सुरनायकस्पृहणीयं मेनकाया रूपलावण्यादिकं । मातृवदपत्यं, इतिन्यायेन मातृगतरूपलावण्यादिकमत एव शकुन्तलायां सम्भवति, अन्यथा कथमेतादृशसौन्दर्याविर्भाव इति भावः ।

राजा — (स्वगतं) कथं, मेनका (निर्वर्ण्य) सत्यं, शकुन्तलाया जननी,

स्वसुताभिमुखी सेयं मेनका नाकभूषणम् ।
विलसत्यद्य दुहितुर्दर्पणे प्रतिबिम्बवत् ॥ २३ ॥

मेनका (1) (शकुन्तलायाश्शिरः परामृशन्ती सबाष्पगद्गदं) दिट्ठिआ, वळ्ळहेण संगदं तुमं पेक्खामि,

राजा — (उत्थाय सविनयं) परोक्षचक्षुषां न किमपि निवेदनीयमस्ति । अनपराधी दुष्यन्तः प्रणमति, (इति शकुन्तलया सह प्रणमति)

---

छाया — (1) दिष्ट्या वल्लभेन सङ्गतां त्वां पश्यामि,

---

॥ स्वसुतेति ॥ सौन्दर्यातिशयेन स्वर्गस्यापि भूषणप्राया सेयं मेनका परिष्वङ्गार्थं स्वसुताभिमुखी सती दर्पणे शकुन्तलायाः प्रतिच्छायेव प्रतिभातीत्यर्थः । यथा मुकुरपुरस्थितस्य जनस्य वामदक्षिणभागौ व्यत्यस्ततया प्रतिभातः, तथा परस्परमभिमुखीभूतयोर्मेनकाशकुन्तलयोरपि वैलक्षण्यं नास्तीति भावः । अत्र नाकभूषणमित्यनेन, मेनकायां देवत्वप्रयुक्ततारुण्यसौन्दर्यलावण्यादिकं निरन्तरमप्येकरूपमिति सूच्यते । उत्तरार्धेन, तादृशरूपलावण्यादिकं मनुष्यसजातीयायां शकुन्तलायां विद्यते, इत्याश्चर्यं व्यज्यते । किं च, उभे अपि प्रसूतैकापत्ये इति सूच्यते ।

॥ दिट्ठिएति ॥ पुरा प्रवृत्तं वृत्तं स्मारंस्मारंपुनरपि शकुन्तलाया वल्लभेन समागमो नैव जायेतेति मनसि निश्चितमासीत् । अयं सङ्गमस्तु दिष्ट्या । वल्लभेन सङ्गतायास्तव दर्शनमपि मे दैववशादेव सञ्जातमिति भावः ।

॥ परोक्षचक्षुषामिति ॥ न ते त्वविदितं किञ्चिदप्यस्ति । अत एव न मया 'अहमनपराधीति वक्तव्यं । तथापि मदन्तःकरणसाक्षिकमन्तश्शुद्धिं प्रकाशयितुं वाचा निवेदयामि, अनपराधीति, इति भावः ।

मेनका — (1) (सापत्रपं) एव्वं एव्व होदु दंपदित्तणं, दिट्ठिआ वअणीआदो विमुक्का वच्छा, वअं हिअअसल्लादो,

शार्ङ्गरवः — राजन्, अपि वर्तते स्मृतिपथे, यदभिहितं, 'स्त्रीणामशिक्षितपटुत्वं' इत्यादिकं, कथमिदानीं मन्यसे शकुन्तलां,

राजा — तत्र दुर्वाससश्शापोऽपराध्यति,

---

छाया — (1) एवमेव भवतु दाम्पत्यं, दिष्ट्या वचनीयाद्विमुक्ता वत्सा, वयं हृदयशल्यात्,

---

॥ दिट्ठिएति ॥ वचनीयात्, अपवादात्, विमुक्ता वत्सा । हन्त, अनूढैव शकुन्तला क्वाप्यापन्नसत्वा कुलटा संवृत्ता, इत्याकारक-लोकापवादाद्विमुक्तेत्यर्थः वयं हृदयशल्यात्, हन्त, मद्दुहिता तावदेवं लोकापवादपात्रमासीत् । इतः परं कथं वा जीवामः, महदिदं कष्ट-मित्याकारकहृदयशल्याद्विमुक्तास्स्मः, इति भावः ।

॥ राजन्निति ॥ शाकुन्तले पञ्चमाङ्के 'महाराज, नार्हस्येवं मन्त्रयितुं, तपोवनसंवर्धितोऽनभिज्ञोऽयं जनः कैतवस्य' इति गौतम्या-भिहितस्य. भवता तावत्, 'तापसवृद्धे' 'स्त्रीणामशिक्षितपटुत्वममा-नुषीषु सन्दृश्यते किमुत याः प्रतिबोधवत्यः' इत्याद्युक्तं किल । तदी-दानीं स्मृतिपथे वर्तते किमु । तदा भवताभिहितं, न्याय्यमुतान्याय्य-मिति विचारितं वा । इदानीं कथं मन्यसे वेत्याशयः ।

॥ तत्रेति ॥ तस्मिन्विषये न मे दोषः । दुर्वाससश्शापोपहत-चेतसा मया तावदेवमभिहितं । अत एवाभिज्ञानदर्शनेन शापाद्विमुक्तोहं प्रत्यादिष्टां शकुन्तलां स्मारंस्मारं पश्चात्तापेन 'इतः प्रत्यादेशात्स्वजन-मनुगन्तुं व्यवसिता' इत्यादिकमनुकम्पन्नताम्य इवारुदं । अत्र चित्र-फलक एव साक्षीति भावः ।

कण्वः — नूनमस्पृष्टदोषगन्धोऽयं राजर्षिः,

मेनका — (1) संसअडोळाअमाणमाणसेण एअरिसिं संणिहिदं

वि उवक्खिदवंतेण राएसिणा णिअधम्मअत्तणं प्पअडिदं,

राजा — (साञ्जलिबन्धं) दिष्ट्या, कृतार्थोऽस्मि,

मेनका — (2) (भरतमादाय) जाद, रूवेण विअ हिअएण वि

तादं अणुसर, (इति कपोलयो श्चुम्बति)

कण्वः — (भरतमादाय) राजन्,

बाल्य एव शिशावस्मिन्भ्राजते सत्वशालिता ।
भवानिव गुणोपेतो भूयादयमपि श्रिया ॥ २४ ॥

---

छाया — (1) संशयडोलायमानमानसेनैतादृशीं सन्निहितामप्युपेक्षितवता राजर्षिणा निजधार्मिकत्वं प्रकटितं,

(2) जात, रूपेणेव हृदयेनापि तातमनुसर,

---

त्रिकालज्ञत्वेनाह ॥ नूनमित्यादिकं ॥

॥ संसपति ॥ एतादृशरूपलावण्यादिस्पृहणीयावयवां स्वयमेवोपनतामपि, मया तावदियं पूर्वमूढा वा न वा, इति संशयडोलायमानमानसेन, अत एव राजर्षिणा त्यक्तवताऽनेन 'न परदारान्गच्छेत्' इति शास्त्रानुसरणरूपं धर्मानुष्ठानं प्रकटीकृतमिति भावः ।

॥ जादेति ॥ रूपेण यथा तातं दुष्यन्तमनुसरसि, तथा धर्मवृत्यापि तातमनुसरेत्यर्थः ।

॥ बाल्य इति ॥ अस्मिन्शिशौ बाल्यानुगुणा चेष्टा नास्ति । किंतु महावीरक्षत्रियानुगुणशक्तिधैर्यादिकं बाल्य एव वर्तते । अत उत्तरत्र महावीरपुरुषो भवतिश्यति न मया तावदाशीः कार्या । किन्तु भवानिव सद्गुणपरिपूर्णस्साम्राज्यश्रियमनुभवत्वित्याशयः ।

राजा — किं वा न भवेद्भगवदनुग्रहभाजनस्य,

कण्वः — आरण्यकानामातिथ्यमङ्गीकृत्य श्वो गन्तुमर्हति राजधानीं महाराजः,

राजा — यथादिशति कुलपतिः,

विदूषकः — (1) (जनान्तिकं) किण्णु खु, अणुमदं विअ, वअस्सेण,

राजा — (जनान्तिकं) भवता तापसानामातिथ्यमवश्यमङ्गीकरणीयमिति,

विदूषकः — (2) (सभ्रूभङ्गं) मह उण एत्थ णाणुमदं,

कण्वः — किं बहुना,

यया वंशप्रतिष्ठा ते तया प्रोषितया समम् ।
दिष्ट्याऽद्य सङ्गतं दृष्ट्वा त्वामहं हृष्टमानसः ॥ २५ ॥

---

छाया — (1) किन्नु खलु, अनुमतमिव वयस्येन,
(2) मम पुनरत्र नानुमतं,

---

॥ किं वे ति ॥ सर्वमपि भवदनुग्रहमहिम्ना भवेदेवेत्यर्थः । स्वतिरस्कारमनुचिन्त्याह ॥ महउणेति ॥

॥ ययेति ॥ ते वंशप्रतिष्ठा, पुत्रोत्पत्त्या वंशस्थितिः । एतेन 'अहो, दुष्यन्तस्य संशयमारूढाः पिण्डभाजः' कुतः अस्मात्परं बत यथाश्रुतिसम्भृतानि को नः कुले निवपनानि करिष्यतीति । नूनं प्रसूतिविकलेन मया प्रसिक्तं धौताश्रुशेषमुदकं पितरः पिबन्ति' इत्यादिभवदुक्तेर्नावकाश इति सूचितं । प्रोषितया, मारीचाश्रमे स्थितया तया समं दिष्ट्या, दैववशात्, इन्द्रसाहाय्यार्थं त्रिदिवं गत्वा प्रतिनिवर्तनावसरे मध्येमार्गं सङ्गतं त्वां, तादृशविरहक्लेशविमुक्तं, अद्याहं दृष्ट्वा हृष्टमानसोऽभवमित्याशयः ।

राजा — (साञ्जलिबन्धं) धन्योस्म्यहमपि प्रसन्नकाश्यपसन्दर्शनेन,

कण्वः — राजर्षे, किं ते भूयः प्रियमुपहरामि,

राजा —

अनन्तपुण्यदृश्यानां दर्शनं भवतामभूत् ।
अहञ्चानुगृहीतोस्मि किमितोऽप्यस्ति मे प्रियम् ॥ २६ ॥

तथापीदमस्तु — (भरतवाक्यं)

भूपालाः परिपालयन्तु भुवनं न्याय्येन सम्यक्पथा
स्याद्गोब्राह्मणमण्डलाय कुशलं लोकोस्तु नित्यं सुखी ।
कासारा रसपूरिता विटपिनः पुष्पैः फलैस्सम्भृताः
सस्याढ्या धरणिश्च सन्तु समये वर्षन्तु धाराधराः ॥

( निष्क्रान्तास्सर्वे )

॥ इति श्रीबालधन्वि जग्गू वकुळभूषण कविविरचिते
प्रसन्नकाश्यपे तृतीयोऽङ्कः ॥

॥ सम्पूर्णं नाटकं ॥

---

॥ धन्योस्म्यहमिति ॥ एतेन, प्रसन्नकाश्यपाख्यनाटकसन्दर्शनेनापि धन्यता सूचिता ।

॥ अनन्तेति ॥ दोषगन्धरहितैरेव भवादृशो महात्मा द्रष्टुं शक्यः-नान्यैः । अत एवाहं दोषगन्धरहितोस्मीति हृष्टोऽस्मि । किञ्च, चिरप्रार्थितो भवतामनुग्रहोपि मया तावल्लब्धः । इतोपि भूयः प्रियं किं वर्तते, इत्याशयः ।

॥ भूपाला इति ॥ एतेन भरतवाक्येन ‘स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः । गोब्राह्मणेभ्यश्शुभमस्तु

नित्यं लोकास्समस्तास्सुखिनो भवन्तु । काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी '। इत्यादिमङ्गलाशासनार्थाः प्रोक्ताः। अत्रेदमवधेयं गवां सौख्येन हविरुपयुक्तस्य पयोघृतादिकस्य प्राप्तिः । पयोघृतादिना ब्राह्मणानां हवनादिनित्यकर्मानुष्ठानं। तेन देवानां तृप्तिः। तया काले वृष्टिप्रदानं । तेन भूमौ सस्यसमृद्धिः । तया प्रजानां सौख्यं । इति परस्परोपकारः प्रदर्शित इति, शं ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यैः श्रीमद्वेदमार्गप्रतिष्ठापनाचार्योभय वेदान्ताचार्यैः श्रीवादिकेसरि अळहियमणवाळ गोविन्द-रामानुजस्वामिभिः काञ्चीपुरमठाधिपतिभिरनु-गृहीता भावोल्लासिनीसमाख्या व्याख्या सम्पूर्णा। इति शं श्रीरस्तु

शुभमस्तु

एम्. वि. चक्रवर्तितनयेन स्वकीय शेषाद्रि मुद्रालये मुद्रापितम्

# PRASANNA-KASYAPAM

BY

JAGGU VAKULABHUSHANAM

This play in three acts purports to take the theme of the Abhijnana Shakuntalam one step further than the resolntion of its 7th Act, as if to satisfy the curiosity of Kalidasa's admirers regarding what might have happened next. The genius of the 4th Act, Kanva, happy in his tranquility and harmony with nature and the external world, should have been disturbed by the discordant note of the 5th Act, rather unpleasantly. The repentance of Dushyanta owed to Kanva a duty not only of gratification, but also one of felicitation in the new circumstances. Fancy delights to dwell on the happy welcome which Priyamvada and Anasuya would extend to Sakuntala when the latter visits the dear old habitation of her younger days as a queen and a mother. The writer possesses laudable facility of versification and in as much as at every turn of expression and dialogue in this supplement we are reminded of ideas and situations in the original the playlet does not fail to amuse us.

22-12-1946. —THE HINDU

॥ श्रीः ॥

# जग्गू वकुलभूषण कविविरचिताः ग्रन्थाः

**गद्यकाव्यं**

जयन्तिका (इयं शय्यापाकादि सर्वविषयेष्वपि महाकवि बाणभट्ट कृतकादम्बरीसहोदरी)

यदुवंशचरितं (बाणभट्टकृतहर्षचरितकल्पं)

उपाख्यानरत्नमञ्जूषा (क्षेमेन्द्रकविकृतचारुचर्या प्रदर्शितोपाख्यान विशदीकरणरूपा)

भावकौमुदी (कादम्बरीकल्याणाख्य नाटकस्य व्याख्या)

**पद्यकाव्यं**

करुणरसतरङ्गिणी

पथिकोक्तिमाला

शृङ्गारलीलामृतम्

**चम्पूकाव्यं**

यतिराजचम्पूः

भारतसङ्ग्रहः

**नाटकानि**

अद्भुतांशुकं (वेणीसंहारस्यपूर्वभागः)

स्यामन्तकं

प्रतिज्ञाकौटल्यं (मुद्राराक्षसस्य पूर्वभागः)

मञ्जुलमंजीरं

बलिविजयः (त्र्यङ्कं)

अमूल्यमाल्यं (त्र्यङ्कं)

अप्रतिमप्रतिमं (त्र्यङ्कं)

मणिहरणं (भासमहाकविकृतस्य एकाङ्कस्य ऊरुभङ्गस्योत्तरभागः)

यौवराज्यं (एकाङ्कं)

प्रसन्नकाश्यपं (त्र्यङ्कं भावोल्लासिनी व्याख्यासमेतं)

संयुक्ता

वीरसौभद्रं (भासकृत दूतघटोत्कचस्य पूर्वभागः)

प्रतिज्ञाशान्तनवं

नवजीमूतं

**स्तोत्राणि**

हयवदनस्तोत्रं

अमृताधिरोहिणी

लक्ष्मीदण्डकं

यदुशैलेशशतकं

*Copies can be had of :*

**JAGGU ALWARIYE**

Sahitya Vidwan

Melkote, Via French

Mysore State.



The Seshadri Press, My